# DWATRINGSHATPUTTALIKA

OR

THIRTY TWO ANECDOTES RELATING TO

RAJA VIKRAMADITYA

COMPILED BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent, Free Sanskrit College, Calcutta.*

**CALCUTTA:**

PRINTED AT THE SARASWATI PRESS.

1881.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

# द्वात्रिंशत् पुत्तलिका ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण

सङ्कलिता ।



कलिकाता नगर्य्याम्

सरस्वती यन्त्रे मुद्रिता ।

१८८१

# द्वात्रिंशत् पुत्तलिका।

श्रीगणेशाय नमः।

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥

श्रीपुराणपुरुषं पुरातनं पद्मसम्भवमुमासुतं मया।
सुप्रणम्य सुभगां सरस्वतीं विक्रमार्कचरितं विरच्यते ॥ २ ॥

श्रीकैलासशैलशिखरे समासीनं परमेश्वरं जगदम्बिका समवदत्।

वेदशास्त्रविनोदेन कालो गच्छति धीमताम्।
इतरेषां तु मूर्खाणां निद्रया कलहेन वा ॥ ३ ॥

इत्युक्त्वा कालापनयनार्थं कापि सकललोकचित्तचमत्कारिणी कथा कथनीयेति। ततः परमेश्वरः पार्वतीं प्रत्याह। भो प्राणेश्वरि! श्रूयताम्।

सकलहृदयहारिणी कथा मया कथ्यते।

अस्ति समस्तवस्तुविस्मितदेवा गुणपराभूतपुरन्दरनिवासा उज्जयिनी नाम नगरी। तत्र सामन्तसीमन्तसिन्दूरारुणितचरणकमलयुगलो भर्तृहरिर्नाम राजाऽभूत् सकलकलाप्रवीणः समस्तशास्त्राभिज्ञश्च तस्यानुजो विक्रमादित्यनामा स्वविक्रमपरिहृतवैराविक्रमोऽभूत्।

तस्य भ्रातुर्भर्तृहरेर्भार्य्या रूपलावण्यादिगुणविनिर्जित सुराङ्गना अनङ्गसेना नामाभूत्।

तस्मिन्नगरे ब्राह्मणः कश्चित्सकलशास्त्रविचक्षणः विशेषतो मन्त्रशास्त्रवित् परं दरिद्री मन्त्रानुष्ठानेन भुवनेश्वरीमतोषयत्। तुष्टा सा ब्राह्मणमवादीत्। भो ब्राह्मण ! तव मन्त्रानुष्ठानेन भक्त्या च प्रसन्नास्मि वरं वृणीष्व। ब्राह्मणेनोक्तम्। यदि मे प्रसन्नासि। तर्हि मां जरामरणवर्जितं कुरुष्वेति।

ततो देव्या दिव्यमेकं फलं दत्त्वा भणितश्च

भो पुत्र ! फलं भक्षय। जरामरणरहितो भविष्यसीति। तदा ब्राह्मणस्तत् फलं गृहीत्वा भवनं प्रत्यागत्य देवतार्चनादिकं विधाय यावत् फलं भक्षयति तावत् मनस्येवं बुद्धिरभूत्। किमिति अहं तावद्दरिद्रः अमरोभूत्वा कस्योपकारं करिष्यामि। परं बहुकालं जीविनापि भिक्षाटनमेव कार्यम्। अतःपरोपकारिणः पुरुषस्य तत्फलं श्रेयसे भवति यतः। यस्तु विज्ञानविभवादिगुणैर्युक्तः क्षणमपि जीवति तस्यैव जीवितं सफलं भवति। तथा चोक्तम्।

यत् जीवति क्षणमपि प्रथितो मनुष्यो
विज्ञानशौर्यविभवादि गुणैः समेतः।
तत् तस्य जीवितफलं प्रवदन्ति सन्तः
काकोऽपि जीवति चिरञ्च बलिञ्च भुंक्ते॥
यज्जीव्यते यशोधर्मसहितं तद्धि जीवितम्।
बलिं कवलयन् क्लिश्नन् चिरञ्जीवति वायसः॥

अपिच।

यस्मिञ्जीवति जीवन्ति बहवः सतु जीवति।

वयांसि किम कुर्वन्ति चञ्चा स्वोदरपूरणम्॥

किञ्च।

क्षुद्राः सन्तु सहस्रशः स्वभरणव्यापारपूरोदराः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं बाड़वो
जीमूतस्तु निदाघसंहृतजगत्सन्तापविच्छित्तये॥

इति विचार्य एतत् फलं राज्ञे दीयते चेत् स राजा जरामरणवर्जितो भूत्वा सर्वोपकारकर्त्ता भविष्यतीति सञ्चिन्त्य तत्फलं गृहीत्वा राजसमीपमागत्य

अहीनां मालिकां बिभ्रत् तथा पीताम्बरं दधत्।
हरो हरिश्च भूपाल! करोतु तव मङ्गलम्॥ ४॥

इत्याशीर्वादपूर्वकं राजहस्ते फलं दत्वाब्रवीत्। भो राजन्! देवतावरप्रसादलब्धमिदमपूर्वफलं भक्षय। जरामरणवर्जितो भविष्यसि। राजा तत्फलं गृहीत्वा तस्मै बहुन्यग्रहाराणि दत्वा विसृज्य विचारयति स्म। अहो ममैतत्फलभक्षणादमरत्वं भविष्यति। मम अनङ्गसेनायां अतीव प्रीतिः। सा मयि जीवत्येव मरिष्यति तदा तस्या-वियोग दुःखं सोढुं न शक्नोमि। तस्मादिदं फलं मम प्राण-प्रियायै अनङ्गसेनायै दास्यामीत्यनङ्गसेनां आहूय दत्तवान्। तस्या अनङ्गसेनायाः कश्चिन्माथुरिकः प्रियतमदासोऽभूत् सा च विचार्य तस्मै फलं ददौ। तस्य माथुरिकस्य काचि-द्दासी प्रियतमा तस्यै स प्रादात्। तस्या अपि कश्चिद्गो-पालके प्रीतिः सा तस्मै दत्तवती। तस्यापि कस्याश्चिद् गोमयधारिण्यां प्रीतिः सोऽपि तस्यै प्रायच्छत्। ततः सा

गोमयधारिणी ग्रामाद्वहिर्गोमयं धृत्वा गोमयभाजनं शिरसि निधाय तदुपरि तत्फलं निक्षिप्य यावद्राज-वीथ्यामागच्छति तावद्राजा भर्त्तृहरिः राजकुमारैः सह विहारार्थं वहिर्गतः तस्याः शिरसि गोमयाग्रे स्थितं फलं दृष्ट्वा गृहीत्वा गृहमागतः । ततो ब्राह्मणमाकार्य्य अब्रवीत् । भो ब्राह्मण ! त्वया यत्फलं दत्तं तादृशमन्यत्-फलमस्ति किं ? ब्राह्मणेनोक्तम् । भो राजन् ! तत्-फलं देवतावरप्रसादलब्धं दिव्यं तादृशमन्यन्नास्ति। राजा तु साक्षादीश्वरः । तस्याग्रे अनृतं न वाच्यम् । स देवतेव निरीक्षणीयः । तथाचोक्तम् ।

सर्वदेवमयो राजा ऋषिभिः परिकीर्त्तितः ।
तस्मात् तं देववत्पश्यन् अलीकं न वदेत् सुधीः ॥१॥

ततो राज्ञा भणितम् । तादृशं फलं दर्शयति काचित् तत्कथं सम्भवति । ब्राह्मणोऽब्रवीत् । तत्फलं भक्षितं वा नवा ? । राजाऽभणत् । न मया भक्षितं मम प्राणवल्लभायै अनङ्गसेनायै दत्तं ब्राह्मणेनोक्तम् । तां पृच्छत तत्फलं किं कृतमिति । ततो राजा तामाकार्य्य तत्फलं किं कृतमिति शपथं कारयित्वाऽपृच्छत तयोक्तम् । माधुरिकाय दत्त-मिति । ततः स आकारितः पृष्टः दास्यै दत्तमिति अकथ-यत् । दासी गोपालकाय गोपालकः गोमयधारिण्यै । ततो राजा च प्रलप्य परमविषादं गत्वा परं श्लोकमपठत् ।

रूपे मनोहारिणी यौवने च वृथैव पुंसामभिमानवृद्धिः ।
नतस्त्रुवां चेतसि चिन्त जन्मप्रभृत्यदेवेच्छति तत्करोति ॥

अहो ! स्त्रीचित्तं केनापि हर्त्तुं न शक्यते । तथा चोक्तम्

अश्वप्लुतं माधवगर्जितं च स्त्रीणां चरित्रं पुरुषस्य भाग्यम्।
अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः॥

गृह्णन्ति विपिने व्याधा विहङ्गं चलतिस्थितम्।
सरिद्भृतवते नावं न स्त्रीणां चापलाकृतिम्॥

किञ्च। बन्ध्यापुत्रस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च।
स्याद्दैवान्न तु नारीणां मनःशुद्धिर्मनागपि॥

अपि च।

सुखदुःखजयं जीवितं ये हि जीवन्ति योगिनः सदा।
मुह्यन्ति तेऽपि हि नूनं न विदुश्चेष्टितं स्त्रीणाम्॥

अन्यच्च।

स्मरोत्सर्गमनुप्राप्य वाञ्छन्ति पुरुषान्तरम्।
नार्यः सर्वाः स्वभावेन वदन्तीत्यमलाशयाः॥

तथा। विनाञ्जनेन मन्त्रेण तन्त्रेण विनयेन च।
वञ्चयन्ति नरं नार्यः प्रज्ञाधनमपि क्षणात्॥

कुलजातिपरिभ्रष्टं निकृष्टं दुष्टचेष्टितम्।
अस्पृश्यं मरणप्राप्तं मन्ये स्त्रीणां प्रियं वरम्॥

गौरवेषु प्रतिष्ठासु गुणेषु साधुगोष्ठिषु।
धृता अपि विसृज्यन्ति दोषमङ्के स्वयं स्त्रियः॥

नार्योहसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति च नरं न तु विश्वसन्ति।
तस्मान्नरेण कुलशीलवता सदैव
नार्यः श्मशानवटिका इव वर्जनीयाः॥

न वैराग्यात् परं भाग्यं न बोधात् परमः सखा।
न हरेरपरस्त्राता न संसारात् परोरिपुः॥

इति एतानि पद्यानि पठित्वा परमं वैराग्यं गतो विक्रमार्कं राज्ये अभिषिच्य स्वयं वनं जगाम।

## इति भर्तृहरेर्वैराग्य कथा।

ततः राजा विक्रमादित्यः देवब्राह्मणानाथदीनार्त्त-कुब्जपङ्ग्वादीनां मनोरथान् पूरयन् प्रजाः सम्यगपालयत्। परिचारकादीनां सन्तोषमुत्पादयन् मन्त्रिसामन्तादीनां वचनपरिपालनेन मनोऽहरत्। एवं सकलानुरञ्जनेन राजा राज्यं करोतिस्म। ततः एकदा कश्चिद्दिगम्बरो राजसमीपमागत्य।

लीलया मण्डलीकृत्य भुजङ्गान् धारयन् हरः।
देयाद्देवो वराहश्च तुभ्यमभ्यधिकां श्रियम्॥

इति आशीर्वादपूर्वकं राज्ञो हस्ते फलं दत्त्वा अब्रवीत्। भो राजन्! अहं कृष्णचतुर्दश्यां महाश्मशाने अघोरमन्त्रेण हवनं करिष्यामि। तत्र त्वया उत्तरसाधकेन भवितव्यम्। राज्ञा च प्रतिज्ञातम्। तस्य तेन प्रसङ्गेन राज्ञो वेतालः प्रसन्नो जातः अष्टौ महासिद्धयश्च प्राप्ताः। भूतले विक्रमस्य सादृश्यं न कोऽपि बभार। त्रिभुवने अस्य कीर्तिरनर्गला गङ्गेव प्रवहतिस्म। अत्रान्तरे सुरलोके देवेन्द्रो विश्वामित्रतपोभङ्गकरणाय रम्भामुर्वशीं चाहुय अवादीत्। भवत्योर्मध्ये नृत्ये गीते या चातिप्रवीणा सा विश्वामित्रतपोभङ्गकरणाय तत्तपोवनं गच्छतु। या विश्वामित्र-तपो-विनाशिनी तस्यै पारितोषिकं अहं दास्यामि। इत्येतद् वचः श्रुत्वा रम्भया भणितम्। अहं नृत्ये प्रवीणा। उर्वश्या भणितं देव! यथाशास्त्रदृष्टं नृत्यं जानामीति तयोर्विवादे जाते

निर्णयार्थं देवसभा समाहूता आसीत्। प्रथमं रम्भानृत्यमभूत्। द्वितीयदिवसे उर्वश्या नृत्यमभूत्। ततः सर्वोऽपि देवगणः उभयोर्नृत्यं दृष्ट्वा सन्तोषमगमत्। इयमत्यन्तं नृत्ये कुशलेति न कश्चित् निर्णयं चकार। तस्मिन्नवसरे नारदेनोक्तम्। भो देवराज! भूतले विक्रमादित्योऽस्ति स सकलकलाभिज्ञो विशेषतः सङ्गीतनृत्यविद्याविचक्षणः स एवैतयोर्विवादनिर्णयं करिष्यति। ततो महेन्द्रेण विक्रमादित्याह्वानार्थं उज्जयिनीं प्रति मातलिः प्रेषितः। ततो विक्रमस्तेनाहूतः नमस्कृत्य सम्मान पूर्वकमुपवेशितः। तदनन्तरं पुनरपि नृत्यावसरो मण्डितः। प्रथमं रम्भा रङ्गे स्थिता नृत्यमकरोत्। द्वितीयदिवसे उर्वशी रङ्गमधिष्ठिता यथा शास्त्रं नृत्यमकरोत्। ततः विक्रमादित्येन उर्वशी प्रशंसिता जयोऽपि दत्तः। इन्द्रेण भणितं कथमस्यै जयो दत्तः। विक्रमेण भणितम्। देव! नृत्ये प्रथममङ्गसौष्ठवं प्रधानम्। तथाचोक्तम्। नृत्यशास्त्रे।

अनुच्चनीच चरतामङ्गानां चलपादता।
कटिकूर्परशीर्षाक्षि कर्णानां समरूपता।
रम्या प्रथितविश्रान्ति करसश्च समुन्नतिः
अभ्यासा गर्हिते पादसौष्ठवं नृत्यवेदिनाम्॥ १॥

अन्यच्च। नर्तक्या रङ्गोचितावस्थान विशेषः प्रकाशनीयः। उक्तं चावस्थानविशेषो नृत्यशास्त्रे।

चतुरस्रत्व सहितौ समपादौ लताकरौ।
प्रारम्भे सर्वनृत्याना मेतत्सामान्यमुच्यते।
यथाह्यन्यै नैव दृश्यस्तथाह्यस्यावपुर्भवेत्।

दीर्घाचं शरदिन्दुकान्ति वदनं बाहू नतावांशयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वौ प्रविष्टाविव।
मध्यः पाणिमितो नितम्बजघनं पादावतराङ्गुलीः
छन्दोनर्तयितुं यथैव मनसाश्लिष्टं तथास्यं वपुः ॥३॥

नृत्यावस्थानविशेषः स्मरणीयः।

वामं सन्धिस्तिमितबलयं न्यस्य हस्तं नितम्बे
तन्वी श्यामा विटपसदृशं त्रस्तमुक्तं द्वितीयम्।
पादाङ्गुल्यां ललितकुसुमे कुट्टिमे पातिताचं
नृत्यादवामा स्थगयतितरां कान्ति भृत्पाद युग्मम् ॥४॥

किं बहुनोक्तेन। अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरति विनयस्तद्विकल्पानुवृत्तौ
भावो भावादति मतिविषयाद्रागबन्धः स एव ॥५॥

एवं नृत्यशास्त्रोक्त लक्षणयुक्ता नर्त्तकी प्रशंसिता मयोर्वशी। ततो महेन्द्रः सन्तुष्टः सन् विक्रमार्कं वस्त्रादिना सम्भाव्य महार्घं वररत्नखचितं सिंहासनं तस्मै ददौ।

तत्सिंहासने खचिता द्वात्रिंशत् पुत्तलिकाः सन्ति।

तासां शिरसि पदं दत्वा तत्सिंहासनमध्यासितव्यम्। तदतिमनोहरं सिंहासनमिन्द्राज्ञां च गृहीत्वा विक्रमार्को निजां पुरीमगमत्। तदनन्तरं शुभे मुहूर्त्ते शुभे लग्ने सिंहासनमधिष्ठाय राज्यं करोतिस्म।

ततोऽनन्तरं वर्षेषु बहुषु गतेषु प्रतिष्ठानगरे शालिवाहनः सार्द्धवर्षद्वय कन्यायां शेषनागेन्द्रादुत्पन्नः। उज्जयिन्यां भूकम्प-धूमकेतु-दिग्दाहाद्युत्पाताः राज्ञा जनैश्च दृष्टाः। ततो विक्र-

मादित्यो दैवज्ञानाहूयावादीत्। भो दैवज्ञाः! किमेतदु-त्पाताः राज्ञा जनैश्च प्रतिदिनं दृष्टाः भवन्ति। एतेषां फलं किं ?कस्य अनिष्टं कथयति ?। तैरुक्तम्। देव! अयं भूकम्पः सन्ध्याकाले जातः अतः राज्ञोऽनिष्टं सूचयति। तथा च नारदीये।

अनिष्टदः चितीशानां भूकम्पः सन्ध्ययोर्द्वयोः।
राज्ञां विनाशपिशुनो धूमकेतुरुदाहृतः।
दिग्दाहः पीतवर्णश्चेत् चितीशानां भयप्रदः। इति
दैवज्ञ वचनं श्रुत्वा राजा तु पुनरब्रवीत् :।

भो दैवज्ञ! मया तपसा सन्तोषित ईश्वरः प्राह। भो राजन्! प्रसन्नोऽस्मि पर्य्यायेणामरत्वं याचयेति तदा मया भणितम् भो देव! सार्द्धवर्षद्वय कन्यायां पुत्रो भविष्यति। तस्मात् मम मरणमस्तु नान्येन। ईश्वरेण तथास्त्विति भणि-तम्। तर्हि तादृशं कुतो जनयिष्यति दैवज्ञैरुक्तम्। देव! दैवो सृष्टिरचिन्त्या तादृशः कस्मिन्नपि देशे उत्पन्नो भवि-ष्यति। तथा च दृश्यते। ततो राजा वेतालमाहूयैतत् सर्वं तस्मै निवेद्याब्रवीत्। भो यक्ष! त्वं सर्वत्र पृथ्वीमध्ये परिभ्र-मन्नेवंविधः कस्मिन् देशे कस्मिन्नगरे समुत्पन्न इति निश्चित्य-स्थानं ज्ञात्वा झटिति समागच्छ ततो वेतालो महाप्रसाद इति वीटिकां गृहीत्वा कुशद्वीपादि द्वीपानालोक्य ज-म्बुद्वीपं प्रत्यागत्य प्रतिष्ठानगरं प्रविश्य कुम्भकारगेहे कश्चिन्माणवकं काञ्चन कन्यकां क्रीडमानौ दृष्ट्वा अपृच्छत्। अहो युवां परस्परं किं प्रभवतः। तदा कन्ययोक्तम् अयं मम पुत्रः। वेतालेनोक्तम्। तव पिता कः। तदा कोऽपि

ब्राह्मणोदर्शित:। ततो ब्राह्मणमपृच्छत्। केयमिति। ब्राह्मणेनोक्तम्। इयं मम कन्या अस्याः पुत्रोऽयं तच्छ्रुत्वा विस्मयङ्गतो वेताल: पुनर्ब्राह्मणमब्रवीत्। भो ब्राह्मण! कथमेतत्। देवानां चरितमगोचरम्। अस्यां शेष-नागेन्द्र: सङ्गममकरोत्। तस्मादस्यां जात: पुत्रोऽयं शालिवाहन:। तच्छ्रुत्वा वेताल: सत्वरं उज्जयिनीं आगत्य राज्ञे विक्रमादित्याय सर्वमपि वृत्तान्तमकथयत्। राजा परितोषिकं दत्त्वा खड्गमादाय प्रतिष्ठानगरङ्गत:। यावत् खड्गेन शालिवाहनं हन्तुं प्रवृत्तस्तावत्तेन दण्डेन ताड़ित:। प्रतिष्ठानगरा दुज्जयिन्यां पतित: वेदनामसह-मान: शरीरं विससर्ज। तस्य राज्ञ: सर्वा स्त्रियोऽग्निं प्रवेशं कर्त्तुं प्रवृत्ता:। तदा मन्त्रिभिर्विचारितं राजा अयमपुत्र:। किं कर्त्तव्यम्। भट्टिनोक्तं विचार्यताम्।

आसां स्त्रीणां मध्ये काचिद्यदि गर्भिणी भविष्यति ततो विचार्यमाणे एका सप्तमास गर्भिणी समभवत्। तदा सर्वैर्मन्त्रिभिर्मिलित्वा गर्भाभिषेक: कृत: मन्त्रिण: स्वयं राज्यं पालयितुं प्रवृत्ता:। तदिन्द्र दत्तं सिंहा-सनं तथैव शून्यमासीत्। एकदा सभा मध्ये अशरीरिणी वागासीत्। भो मन्त्रिण:! स्वयं राज्यं पालयितुमेत-स्मिन् सिंहासने उपवेष्टुं च योग्यस्तादृशो राजा नास्ति। तर्हि सुक्षेत्रे निक्षिप्यतामिदं सिंहासनं तच्छ्रुत्वा सर्वै-र्मन्त्रिभिरति पवित्रक्षेत्रे तत् सिंहासनं निक्षिप्तम्। निक्षे-पानन्तरं बहूनि वर्षाणि गतानि। भोजराजो राज्यं प्राप्य तस्मिन् राज्यं कुर्वति एकदा कश्चिद्ब्राह्मणो यत्र सिंहासनं

निक्षिप्तं तत् क्षेत्रं कृत्वा यावनालानवपत्। तस्मिन् क्षेत्रे महत्फलमभूत्। स ब्राह्मणः यत्र तत्सिंहासनं निक्षिप्तं तदुच्च स्थानमिति मत्वा पक्षिणामुत्थापनार्थं तदुपरि मञ्चं कृत्वोपविश्य पक्षिण उत्थापयति ततः एकदा भोजराजो वै विहारं कर्त्तुं सकलराजकुमारैः समवेतस्तत् क्षेत्रसमीपं यावद्गच्छति तावन्मञ्चोपरिस्थितेन ब्राह्मणेनोक्तम्। भो राजन्! एतत् क्षेत्रं सम्यक् फलितमस्ति ससैन्यः समागत्य यथेच्छं भुज्यताम्। अश्वेभ्यश्चणका दीयन्ताम्। अद्य मज्जन्म सफलमभूत्। यतो भवान्ममातिथिर्जातः यत ईदृशः प्रस्तावः कदा सम्पद्यते तच्छ्रुत्वा स राजा ससैन्यः क्षेत्रमध्ये प्रविष्टः। अथ ब्राह्मणोऽपि मञ्चकादवरुह्य राजानं क्षेत्रमध्ये स्थितं भणति। भो राजन्! किमयमधर्मः क्रियते। इदं ब्राह्मण क्षेत्रं विनश्यते त्वया। यद्यन्यायः क्रियते चेत् तुभ्यं निवेद्यते त्वमेवान्यायं कर्त्तुं प्रवृत्तः। इदानीं को वा निवारयिष्यति। उक्तञ्च। गर्ज्जे कण्डुगरीये च रात्रि जारिणि वा पुनः।

पापकृत्सु च विद्वत्सु नियन्ता जन्तुरत्र कः॥ १॥

भवान् धर्मशास्त्राभिज्ञश्च ब्राह्मणद्रव्यं कथं नाशयति ब्रह्मस्वमेतद्विषमं तथाहि।

न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्।

इति तेनोक्तं श्रुत्वा राजा यावत् क्षेत्राद्बहिः सपरिवारो निर्गच्छति तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारूढो वदति भो! राजन् किमिति गम्यते। क्षेत्रं

साधु फलितमस्ति। यावनालकदण्डानश्वादयो भक्ष-यन्तु। उर्व्वारुकफलानि सन्ति उपभुज्यन्ताम्। पुनर्ब्राह्मण-वचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्ये प्रविशति तावत्पक्ष्युत्थापनार्थं मञ्चादवरुह्य पुनस्तथैवा भणत्। ततो राजा स्वमनसि विचारयति। अहो आश्चर्यं यदा अयं ब्राह्मणो मञ्चमारोहति तदास्य चेतसि दातव्यं भोक्तव्यमिति बुद्धिरुत्पद्यते। यदा अवतरति तदा हीनबुद्धिर्भवति तदहं मञ्चमारुह्य पश्यामीति मञ्चमारुरोह। भोजराजस्य चेतसि तदा वासना एवमभूत्। विश्वस्यार्त्तिः परिहरणीया सर्व्वस्य लोकस्यापि दारिद्र्यं सम्यक् निवारणीयं दुष्टा दण्डनीयाः सज्जनाः पालनीयाः प्रजा धर्म्मेण पालनीयाः। किं बहुना। अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यति तदपि देयमिति आनन्दपरिपूर्णः पुनर्विचारयति। अहो एतत् क्षेत्रमस्य एवं विधां बुद्धिमुत्पादयति। उक्तञ्च

जले तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः॥

कथमेतत् क्षेत्रस्य माहात्म्यं ज्ञायत इति विचार्य्य ब्राह्मणमाहूयावादीत्। भो ब्राह्मण! तवै तस्मात् क्षेत्रात् कि-यल्लाभो भवति। ब्राह्मणेनोक्तम्। भो राजन्! सकलकुशलेन त्वया अविदितं किमपि नास्ति। यदर्हति तत्करोतु। राजा नाम साक्षाद्विष्णोरवतारभूतः तस्य दृष्टिर्यस्योपरि पतति तस्य दैन्यदुर्भिक्षादयो नश्यन्ति राजा नाम साक्षात् कल्पवृक्षः। स त्वं ममदृष्टेर्गोचरोऽभूः अद्य मम दैन्यदारि-द्र्यातादीनामवसानं जातम्। क्षेत्रं कियत्? ततो राजा :

ब्राह्मणं धनधान्यादिना परितोष्य तत्क्षेत्रं गृहीत्वा मध्यकाय: खानयितुं प्रारम्भमकार्षीत्। पुरुषप्रमाणे गर्ते जाते शिलैका सुमनोहरा अवलोकिता। तदध: चन्द्रकान्तशिलाविनिर्मितं नानारत्नखचितं द्वात्रिंशत्पुत्तलिकाभियुक्तम् अतिरमणीयं दिव्यमेकं सिंहासनमपश्यत्। तत्सिंहासनं दृष्ट्वा भोजराज: परमानन्दलहरीपरिपूर्णहृदयो भूत्वा सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति तावदधिकं गुरु भवति नोच्चलति च। ततो मन्त्रिणमवदत्। भो मन्त्रिन्! किमर्थमेतत् सिंहासनं नोच्चलति। मन्त्रिणोक्तम्। राजन् एतत्सिंहासनं दिव्यमपूर्वं च वलिहोमपूजादिकं विना नोच्चलिष्यति तव साध्यं च न भविष्यति। तस्य वचनं श्रुत्वा राजा ब्राह्मणान् आहूय तै: सर्वमपि विधानं कारितवान्। ततस्तत्सिंहासनं लघु भूत्वा स्वयमेवोच्चलतिस्म। तत्दृष्ट्वा राजा मन्त्रिणमुवाच। भो मन्त्रिन्! एतत्सिंहासनं प्रथमं ममासाध्यमभवत्। परन्तु इदानीं तव बुद्धिप्रभावेण मम हस्तगतमासीत्। अहो बुद्धिमतां संसर्गो लाभाय सुखाय च भवति। ततो मन्त्रिणा भणितम्। भो राजन्! श्रूयतां य: स्वयं बुद्धिमान् भवति अन्येषामपि बुद्धिं न शृणोति स सर्वथा नाशं प्राप्नोति। त्वं तथाविधो न भवसि। बुद्धिमानपि आप्तवचनं शृणोषि अतस्तव सकलकार्येष्वन्तरायो नास्ति। राजा अब्रवीत् योऽनर्थकार्यं निवारयति आगाम्यर्थं साधयति च स एव मन्त्री। तथाचोक्तम्।

स्थितस्य कार्यस्य समुद्भवार्थम् आगामिनोऽर्थस्य च सम्भवार्थम्।
अनर्थकार्ये प्रतिघातमार्थं यो मन्त्यतेऽसौ परमो हि मन्त्री॥

मन्त्रिणोक्तम्। भो राजन्! मन्त्रिणा स्वामिहितकार्यं कर्त्तव्यम्।

मन्त्रः कार्यानुगो येषां कार्यं स्वामिहितानुगम्।
त एव मन्त्रिणो राज्ञां न तु ये गल्लफुल्लाः॥

अन्यच्च। यथामन्त्रिणा विना राज्यं गृहं धान्यादिकं विना।
विना तारुण्यं सौभाग्यं विना ज्ञानं विरागता॥

दुर्जनानां शान्तिः। पाषण्डिनां मतिः वेश्यानां प्रीतिः। खलानां मैत्री, पराधीनस्य स्थातव्यम्। निर्धनस्य रोषः। सेवकस्य कोपः। स्वामिनः स्नेहः। कृपणस्य गृहम्। व्यभिचारिण्याः पुरुषभक्तिः तस्कराणां युक्तिः। मूर्खाणां सम्मतिः इत्येतत् सर्वं कार्यं निष्फलं ज्ञातव्यम्। अन्यच्च। राज्ञा महतां सेवा कर्त्तव्या। आप्तानां वचः श्रोतव्यम्। देवब्राह्मणाः प्रतिपालनीयाः। न्यायमार्गेण वर्त्तितव्यम्। भो राजन्। राजलक्षणोक्ता गुणाः सर्वे त्वयि विद्यन्ते। त्वं सकलराजराजोत्तमः। मन्त्रिणापि एवंविधगुणगरिष्ठेन भवितव्यम्। यः कुलक्रियातः कामन्दकचाणक्यपञ्चतन्त्रादिसकलशास्त्रकलाभिज्ञश्च। गुणाः—स्वामिकार्यार्थम् उद्यमः, पापाङ्गयं, प्रजानां सङ्गोपनीयम्, परिचारकाणां संयोजनीयं, राज्ञः चित्तवृत्त्यनुसरणं, समयोचितप्रतिज्ञानञ्च। अपायकार्य्याद्राजा निवारणीयः। एवंविधगुणयुक्तो मन्त्रिपदयोग्यो भवति। यथा नन्दराजमन्त्रिणा बहुश्रुतेन राज्ञो ब्रह्महत्या निवारिता। भोजराजेनोक्तम्। कथमेतत्? मन्त्री वदति।

भो राजन्! श्रूयताम्; कथयामि।

विशालायां नगर्यां भर्तृ नाम राजा महाशौर्यसम्पन्नोऽभूत्। निजभुजबलेन सर्वान् प्रत्यर्थिनृपतीन् पादपद्मोपजीविनो विधाय एकच्छत्रेण राज्यं करोति स्म। तस्य राज्ञः जयपालो नाम पुत्रः, षड्विध दण्डायुधसाधनाभिज्ञो नाममन्त्री बहुश्रुतो, भार्या भानुमती च नाम आसीत्। सा राज्ञोऽति प्रिया। भूपतिः सर्वदा तस्यामनुरक्तः सुरतसुखमनुभवन् तिष्ठति स्म। यदा सिंहासने उपविशति तदा अर्द्धाङ्गे भानुमतीमुपवेशयति। क्षणमपि तस्या वियोगं न सहते। एकदा मन्त्रिणा मनसि विचारितम् अयं राजा निर्लज्जो भूत्वा सभामध्ये सिंहासने स्त्रियमुपवेशयति। सर्वोऽपि जनस्तां पश्यति महदेतदनुचितं यः कामी स उचितानुचितं न जानाति। तथा हि।

किमु कुवलयनेत्राः सन्ति नो नाकनार्य<br>
स्त्रिदशपतिरहल्यां तापसीं यः सिषेवे।<br>
हृदयतृणकुटीरे दह्यमाने स्मराग्नौ<br>
उचितमनुचितं वा वेत्ति कः पण्डितोऽपि॥ १॥

यः स्त्रीणां कटाक्षबाणै र्यावन्न भिद्यते तावदेव प्रतिष्ठां धैर्यं च वहति। तथाचोक्तम्।

तावद्धत्ते प्रतिष्ठां प्रशमयति मनश्चापलं तावदेव<br>
तावत्सिद्धान्तसूत्रं स्फुरति हृदि परं विश्वलोकैकदीपम्।<br>
क्षीराब्धेः पारवेलावलयविलसितैर्मानिनीनां कटाक्षै-<br>
र्यावन्नो हन्यमानं कलयति हृदयं दीर्घलोलायताक्षैः॥

अहो मदनस्य माहात्म्यं कालज्ञमपि विकलयति। उक्तञ्च।

विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति।
अधीरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥ २ ॥

तथा च।

श्रुतं सत्यं तपः शीलं विज्ञानं तत्त्वमुत्तमम्।
इन्धनीकुरुते मूढः प्रविश्य वनितानले ॥ ३ ॥
इतिवृत्तं बलस्यान्तं स्वकुलस्यापि लाञ्छनम्।
मरणन्तु समीपस्थं कामी लोको न पश्यति ॥ ४ ॥

इति सञ्चिन्त्य एकदावसरं प्राप्य राजानमब्रवीत्। भो राजन्! किञ्चित् विज्ञाप्यमस्ति। राज्ञोक्तम्। किन्तद् ब्रूहि। मन्त्रिणोक्तम्। यदेतद्भानुमती सभामध्ये अर्द्धासने उपविशति तन्महदनुचितं भवति। असूर्य्यम्पश्या राजदारा इति शास्त्रकार-वचनम्। अत्र नानाविधो जनः समागत्य तां पश्यति। राज्ञोक्तम्। सर्वमपि जानामि किं करोमि मम महती प्रीतिः अस्याम्। इमां विहाय क्षणं स्थातुं न शक्नोमि। मन्त्रिणोक्तम्। तर्ह्येवं क्रियतां राज्ञोक्तम्। किं तन्निरूप्यताम्। तेनोक्तम्। चित्रकारमाहूय तेन पटस्योपरि भानुमत्या रूपं लेखयित्वा पुरःस्थिते भित्तिप्रदेशे सङ्घट्टय तस्याः स्वरूपं द्रष्टव्यं तद्वचनं राज्ञः चित्ते लग्नम्। ततो राजा चित्रकारमाहूयोक्तवान्। भो चित्रकार! भानुमत्या रूपं चित्रे लेखनीयम्। चित्रकारेणोक्तम्। भो देव! तस्याहं रूपं प्रथमं प्रत्यक्षं विलोक्य पश्चाद्यथावयवं विलिखिष्यामि। तच्छ्रुत्वा राज्ञा भानुमती आकारिता। तस्मै दर्शिता च। स तु तां विलोक्य पद्मिनी स्त्री इयमिति विज्ञाय पद्मिनीलक्षणयुक्तां विलिलेख। पद्मिनीलक्षणं यथा।

भ्रमतनुकुलमध्ये फुल्लराजीवगन्धा
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे।
चकितमृगसनाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घं श्रीफलश्रीविड़म्बि ॥१॥
तिलकुसुमसमानं बिभ्रती नासिकं स्वं
द्विजसुरगुरुपूजां श्रद्दधाना सदैव।
कुवलयदलकान्तिः कापि चाम्पेयगौरी
विकच कमलकोशा कामिनी कान्तपत्रा ॥ २ ॥
व्रजति मृदु सलीलं राजहंसीव तन्वी
त्रिवलि ललितमध्या हंसवाणी सुवेषा।
मृदु लघु शुचि भुङ्क्ते राजहंसी सुकेशी
धवलकुसुमवासोवल्लभा पद्मिनी स्यात् ॥ ३ ॥

एवमुक्त लक्षणयुक्तं तस्याः रूपं लिखित्वा राज्ञो हस्ते समर्पितवान्। राजापि तत्र चित्रलिखितां तां दृष्ट्वा अतिसन्तुष्टस्तस्मै चित्रकाराय उचितं ददौ। तदनन्तरं शारदानन्देन राजगुरुणा चित्रपटलिखितां भानुमतीं दृष्ट्वा चित्रकं प्रति भणितम्। भो चित्रक! भानुमत्याः सर्वं लक्षणं लिखितं परमेकं विस्मृतं त्वया। तेनोक्तम्। भो स्वामिन्! किं विस्मृतं कथय। शारदानन्देनोक्तम्। तस्याः वामजघनस्थले तिलकसदृशो मत्स्योऽस्ति स न लिखितस्त्वया। राजापि शारदानन्दवचनं श्रुत्वा तत्प्रत्ययनिरीक्षणार्थं यावत् सुरतसमये तस्याः वामजघनं पश्यति तावत्तिलकसदृशो मत्स्यो दृष्टः। तं दृष्ट्वा राजा स्वमनसि अचिन्तयत् कथमस्याः गुह्यदेशे स्थितं मत्स्यं दृष्ट;

वान्। सर्वथानया सह अस्य संसर्गो विद्यते। अन्यथा कथमेतद्नेन ज्ञातम्। स्त्रीणां विषये पापसन्देहः कर्त्तव्यः। तथा च।

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः।
हृदये चिन्तयन्त्यन्यं न स्त्रीणामेकतो रतिः॥
नाग्निस्तृप्यति काष्ठौघैर्नापगाभिर्महोदधिः।
नान्तकः सर्वभूतेषु न पुम्भिर्वामलोचना॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता जनः॥
इत्थं नारद! नारीणां पातिव्रत्यं हि कल्पते।
यो मोहान्मन्यते मूढ़ो रक्तेयं मयि कामिनी॥
स भवेद् वशगस्तस्या नृत्यक्रीड़ाशकुन्तवत्।
तासां वाक्यानि स्वल्पानि तथ्यानि सुगुरूण्यपि॥
करोति यः कृती लोके लघुत्वं तस्य निश्चितम्।
अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते॥

इत्येवं विचार्य मन्त्रिणमाहूय पूर्ववृत्तान्तमकथयत्। मन्त्रिणापि तत्समये तच्चित्तानुकूलं यथा तथा भणितम्।

भो राजन्! कस्य चेतसि कीदृग्विधमस्ति तत् केन ज्ञायते सर्वथा सत्यं भवितुमर्हत्ययं वृत्तान्तः। राज्ञा भणितम्। भो मन्त्रिन्! यदि मम त्वं प्रियस्तर्हि अमुं शारदानन्दं मारय। मन्त्रिणापि तथास्त्विति उक्त्वा लोकानां पुरतो धृतः शारदानन्दो बद्धश्च तस्मिन् अवसरे शारदानन्देन भणितम्। अहो राजा न कस्यापि प्रियो भवतीति लोकोक्तिः सत्या। तथा हि।

कोऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः।
कः कालस्य न गोचरत्वमगमत् कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्॥
काके शौचं द्यूतकारे च सत्यं क्लीवे शौर्यं मद्यपे तत्त्वचिन्ता।
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः राजा मित्रं केन दृष्टं श्रुतं वा॥१

राजा यस्मै क्रुध्यति स शुचिरप्यशुचिर्भवति। तथा चोक्तम्।

शुचिरशुचिः पटुरपटुः शूरोभीरुश्चिरायुरल्पायुः।
कुलजः कुलेन हीनो भवति नरो नरपतेः क्रोधात्॥२॥

ततो मन्त्रिणा बध्यस्थानं प्रति नीयमानः श्लोकमपठत्।
वने रणे शत्रु जलाग्निमध्ये महार्णवे पर्वतमस्तकेषु।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि॥३॥

मन्त्रिणा स्वमनसि विचारितम्। अहो एतत्सत्यं वा मिथ्या वा किमर्थं ब्राह्मणवधः क्रियते। महदनुचितमेतदिति शारदानन्दमन्त्रैः अज्ञातं स्वान्तर्भवनं नीत्वा भूगर्भे निक्षिप्य राजानं प्रत्यागत्य भणितम्। भो राजन्! अनुष्ठिता तवाज्ञा राज्ञा साधु कृतमिति भणितम्। तदनन्तरमेकदा राजकुमारः आखेटार्थं वनं प्रति निर्गतः। निर्गमनसमये अपशकुनोऽभूत्। स यथा।

अकालवृष्टिः शवसूतकञ्च निर्घात उल्कापतनं तथैव।
इत्याद्यनिष्टानि ततो बभूवुर्निवारणार्थं सुहृदो वचश्च॥

तस्मिन्नवसरे मन्त्रिपुत्रेण बुद्धिसागरेणोक्तम्। भो जयपाल! अद्य आखेटं मा गच्छ महानपशकुनो दृश्यते। ततो

जयपालेनोक्तं अपशकुनस्य प्रतीतिर्नास्ति। तेनो-क्तम्। भो राजकुमार! बुद्धिमता पुरुषेणानिष्टोऽप-शकुनः प्रत्यक्षेण द्रष्टव्यः। उक्तञ्च।

न विषं भक्षयेत् प्राज्ञो न क्रीड़ेत्पन्नगैः सह।

न निन्देत् योगिनां वृन्दं ब्रह्मद्वेषं न कारयेत्॥

इति तेन निवारितोऽपि तद्वचनमनादृत्य राजपुत्रो निर्गतः। पुनर्निर्गमनसमये तेन भणितम्। भो जय-पाल! तव विनाशकालः समायातः अन्यथैवं बुद्धिर्नो-त्पद्यते। तथा चोक्तम्।

नीता न केनापि न दृष्टपूर्वा न श्रूयते हेममयी कुरङ्गी।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः॥१॥
उपार्जितानां कर्म्मणामुपभोगं विना कथं विनाशः स्यात्।
सद्भावो नास्ति वेश्यानां स्थिरता नास्ति सम्पदाम्।
विवेको नास्ति मूर्खाणां विनाशो नास्ति कर्म्मणाम्॥ २॥

ततो राजकुमारो वनं गत्वा बहून् श्वापदान् व्यापाद्य कृष्णसारं दृष्ट्वा तदनुगतो महदरण्यं प्रविष्टो यावत् पश्यति तावत् सर्वोऽपि सैन्यवर्गः नगरमार्गे लग्नः।

कृष्णसारोऽपि तत्र दृश्यो जातः। स्वयमेकाकी तुरगा-रूढ़ः सरोवरस्य अग्रे वनमपश्यत्। तत्राश्वादवतीर्णो वृक्षशाखायामश्वं निबध्य जलपानं विधाय। यावद्वृक्षा-धश्छायामुपविशति तावदतिभयङ्करः कश्चिद्व्याघ्रः समागतः तं व्याघ्रं दृष्ट्वाश्वो बन्धनं त्रोटयित्वा पलाय-मानो नगरमार्गमगमत्। राजकुमारोऽपि भयाद्वेपमानः शाखामालम्ब्य वृक्षमारूढ़ः। पूर्वारूढ़ं भल्लूकं दृष्ट्वा पुनर-

त्वत्तं भयं प्राप्तः। अथ तेन भल्लूकेन भणितम्। भो राजकुमार! त्वं मा भैषीः अद्य मम शरणागतस्त्वं अत एवाहं किमप्यनिष्टं न करिष्यामि मां विश्वस्य व्याघ्रा-दपि न भेतव्यं राजकुमारेण भणितम्। भो ऋक्षराज! अहं तव शरणागतः विशेषतो भयभीतः अतो महत् पुण्यं शरणागतरक्षणात् भवति।

एकतः क्रतवः सर्वे सहस्रवरदक्षिणाः।
एकतो भयभीतानां प्राणिनां प्राणरक्षणम्॥

तदा भल्लूकेन समाश्वासितो राजपुत्रः। व्याघ्रोऽपि वृक्षाधःसमायातः ततः सूर्योऽप्यस्तङ्गतः। रात्रावतिश्रान्तं राजपुत्रं यावत् निद्रा समायाति वृक्षाधः पतिष्यसि एहि ममाङ्के निद्रां कुरु एवमुक्तस्य भल्लूकस्याङ्के निद्राङ्गतः राजपुत्रः। तदा व्याघ्रो वदति भो भल्लूक! अयं ग्रामवासी पुनरपि मृगययास्मान् निहनिष्यति अतस्त्वयं किमर्थमङ्के निवेशितः। यतोऽयं मानुषः उक्तञ्च।

मानुषेषु कृतं नास्ति तिर्यग्योनिषु यत्कृतम्।
व्याघ्रवानरसर्पाणां भाषितं न कृतं मया॥ १॥

त्वयोपकृतोऽप्ययमपकारमेव करिष्यति तस्मादमुमधः पातय। अहमेनं भक्षयित्वा सुखेन गमिष्यामि। त्वमपि निजाश्रमङ्गच्छ। भल्लूकेनोक्तम्। अयं यादृशोऽपि भवतु परं मम शरणागतः अमुं न पातयिष्यामि। शरणागतमारणे महत्पापम्।

विश्वासघातकाश्चैव शरणागतघातकाः।
वसन्ति नरके घोरे यावदाभूतसंप्लवम्॥ १॥

तदनन्तरं राजपुत्रो विनिद्रो जातः। भल्लूकेनोक्तम्। भो राजकुमार! अहं क्षणं निद्रां करिष्यामि। त्वमप्रमत्तः तिष्ठ। तेनोक्तम्। तथा भवतु। ततो भल्लूको राजपुत्र-समीपे निद्राङ्गतः। तदा व्याघ्रेणोक्तम्। भो राजकुमार! त्वमस्य विश्वासं मा कुरु यतोऽयं नखायुधः। उक्तञ्च।

नदीनाञ्च नखीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु॥ १॥

अयं च चलचित्तो दृश्यते। तस्मादस्य प्रसादोऽपि भयङ्कर एव।

क्षणं तुष्टाः क्षणं रुष्टा न तुष्टाश्च क्षणे क्षणे।
अव्यवस्थितचित्तानां प्रसादोऽपि भयङ्करः॥ १॥

अयं त्वां मत्तो रक्षित्वा स्वयमत्तुमिच्छति। अतस्त्वममुं भल्लूकमधः पातय अहमेनं भक्षयित्वा गमिष्यामि। त्वमपि निज नगरङ्गच्छ। तत् श्रुत्वा राजपुत्रो यावत् तमधः पातयति तावद्भल्लूको वृक्षात् पतनमन्तरा शाखामन्यामव-लम्बितवान्। पुनस्तं दृष्ट्वा राजपुत्रो भयमाप भल्लूकोऽप्य-वदत्। भो पापिष्ठ! किमर्थं बिभेषि यत् पुरार्जितं कर्म्म तत् त्वया भोक्तव्यमस्ति। तर्हि त्वं ससेमिरेति वदन् पिशाचो भव इति शापं दत्तवान्। ततः प्रभातमासीत्। व्याघ्रस्त-स्मात् स्थानात् निर्गतः। भल्लूकोऽपि राजकुमारं शप्त्वा निज-स्थानमगात्। राजकुमारोऽपि ससेमिरेति वदन्। पिशाचो भूत्वा वनं परिभ्रमति स्म। राजपुत्रस्य तुरङ्गो राजपुत्रेण शून्यो नगरमगमत् जनाः अश्वं शून्यं दृष्ट्वा राज्ञोऽग्रे केव-लमागतमश्वमाचख्युः। ततो राजा मन्त्रिणमाहूय भणति

स्म। भो मन्त्रिन्! यदा कुमारो मृगयार्थं वनं प्रति निर्गत। तदा महानपशकुन आसीत्। तमुल्लङ्घ्य निर्गतस्तस्य प्रत्ययो जातः तेनारूढोऽश्वः शून्यः सन् वनादागतः। अतस्तन्मार्गणार्थं वनं प्रति गमिष्यामः। तेनोक्तं देव! तथा कर्त्तव्यम्। ततो राजा मन्त्रिणा परिवारेण च सह येन मार्गेण स गतः तेनैव मार्गेण वनङ्गतः। वनमध्ये परिभ्रमन्तं ससेमिरा इति वदन्तं पिशाचीभूतं दृष्ट्वा महाशोकसागरे निमग्नस्तमादाय स्वपुरमगमत्। मणिमन्त्रौषधज्ञान् आहूय तैश्चिकित्सितोऽपि न स्वस्थो बभूव। तस्मिन्नवसरे राजा मन्त्रिणमवदत्। भो मन्त्रिन्! अस्मिन्नवसरे शारदान्दश्चेद्तिष्ठत् तर्हि क्षणमात्रेणामुमचिकित्सत्। स मया मारितः पुरुषेण यत्कार्य्यं क्रियते तद्विचार्यैव कर्त्तव्यम्। अन्यथा परमापदः सम्भवन्ति। उक्तञ्च।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥
अपरीक्ष्य न कर्त्तव्यं कर्त्तव्यं च परीक्षितम्।
पश्चाद्भवति सन्तापो ब्राह्मणी लगुडं यथा॥ २॥

तस्मिन्नवसरे कोऽपि निवारको नासीत्। मन्त्रिणोक्तम्। स समयस्तथैव स्थितः। यादृशं भवितव्यञ्च तादृशी बुद्धिरपि जाता। उक्तञ्च।

आशा सम्पद्यते बुद्धिः सा मतिः सा च भावना।
सहायास्तादृशाज्ञेया यादृशी भवितव्यता॥ १॥

न हि भवति यन्न भव्यं भवति च भव्यं विना प्रयत्नेन।

करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति॥

राज्ञोक्तम्। तत्तथैवानुसारेणाभूत्। इदानीमस्य विषये महाप्रयत्नः कर्तव्यः। मन्त्रिणोक्तम्। कथम्। राजाऽब्रवीत्। यः कोऽप्यस्य पुत्रस्य चिकित्सां करिष्यति। तस्यार्द्धं राज्यं दीयत इति मे घोषः प्रदातव्यः। मन्त्रिणापि तथा कारयित्वा स्वभवनमागत्य शारदानन्दाग्रे सर्वमपि वृत्तान्तमकथयत्। तत् सर्वं श्रुत्वा शारदानन्देन भणितम्। भो मन्त्रिन्! राज्ञोऽग्रे निरूपय यत् मम कापि कन्या वर्तते। तस्या दर्शनमस्य कार्यं सा कमप्युपायं करिष्यति। तच्छ्रुत्वा राज्ञोऽग्रे मन्त्रिणा तथैव कथितम्। ततो राजा सर्वसभासहितो मन्त्रिमन्दिरमागत्योपविष्टः। तदा राजपुत्रोऽपि ससेमिरा इतिवदन्नुपविष्टः। तच्छ्रुत्वा जवनिकान्तःस्थितेन शारदानन्देन पद्यान्येतानि भणितानि।

सद्भावप्रतिपन्नानां वञ्चने का विदग्धता।
अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम्॥ १॥

तत्पद्यं श्रुत्वा चतुर्णामक्षराणां मध्ये एकमक्षरं परित्यक्तम्। पुनर्द्वितीयं पद्यमपठत्।

सेतुं गत्वा समुद्रस्य गङ्गासागरसङ्गमम्।
ब्रह्महत्या प्रमुच्येत मित्रद्रोही न मुच्यते॥ २॥

तत् पद्यं श्रुत्वा अक्षरद्वयं परित्यक्तम्। ततस्तृतीयं पद्यमपठत्।

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
त्रयस्ते नरकं यान्ति यावदाभूतसंप्लवम्॥ ३॥

तत एकमेवाक्षरमपठत्। तदनन्तरं चतुर्थं पद्यमपठत्।

भो राजन् ! तव पुत्रस्य यदि कल्याणमिच्छसि ।
देहि दानं द्विजातिभ्यो देवताराधनं कुरु ॥

एवमुक्तवति शारदानन्दे राजपुत्रः स्वस्थः सावधानश्चाभवत् । ततः पितुरग्रे भल्लुकस्य पूर्ववृत्तान्तमकथयत् । तच्छ्रुत्वा राजाऽब्रवीत् ।

ग्रामे वससि कौमारी अटव्यां नैव गच्छसि ।
ऋक्ष भल्लूक व्याघ्राणां कथं जानासि भाषितम् ॥ २ ॥

तदा जवनिकान्तःस्थितेन शारदानन्देन भणितम् ।

देवद्विज-प्रसादेन जिह्वां वसति शारदा ।
तेनाहमवगच्छामि भानुमत्या स्तिलं यथा ॥ २ ॥

तद्वचनं श्रुत्वा राजा साश्चर्यो भूत्वा यावज्जवनिकामपकर्षति तावत् शारदानन्दं दृष्टवान् । अथनरपति-प्रभृतिभिः सर्वैर्नमस्कृतः शारदानन्दः । तदा मन्त्रिणा पूर्ववृत्तान्तः कथितः । राजा बहुश्रुतं मन्त्रिणमुवाच । भो मन्त्रिन् ! तव संसर्गेण कीर्तिः प्राप्ता दुर्गतिश्च गता । अतः पुरुषेण सतां सङ्गो विधेयः । तेनोभयमपि प्रयोजनं भवति । तथा च ।

वारयति वर्त्तमाना मापदमागामिनीं सत्सेवा ।
तृष्णां च पीतं गङ्गाया दुर्गतिं नश्यति तथा चाम्भः ॥

मम पुत्रोऽपि त्वद्बुद्धिकौशलेन महद्विपज्जालात् रक्षितः । राज्ञा ईदृशानां सतां महाकुलानां संग्रहः कर्त्तव्यः । उक्तञ्च ।

संग्रहं वा कुलीनस्य सर्पस्येव करोति यः ।
स एव श्लाघ्यते मन्त्री सम्यग्गारुड़िको यथा ॥ २ ॥

इति नानाप्रकारैः स्तुतिकदम्बकैर्मन्त्रिणं स्तुत्वा वस्त्रा-

दिना सम्भाव्य राज्यमकरोत्। इति मन्त्री भोजराजं प्रति कथां कथयित्वा पुनरब्रवीत्। भो राजन्! यो राजा मन्त्रिवाक्यं शृणोति स दीर्घायुः सुखी च भवति। ततो भोजराजो स्वमन्त्रिणं स्तुत्वा वस्त्रादिना सम्भाव्य तत्सिंहासनं नगराभ्यन्तरं नीत्वा तत्र सहस्रस्तम्भैर्मण्डपङ्कारयित्वा सुमुहूर्त्ते तत्र मन्त्रीभिर्विराजमानो विप्रैराशीर्भिरर्चितो वन्दिभिः प्रशंसितः चातुर्वर्ण्यं दानमानाभ्यां सम्भाव्य दीनवधिरपङ्गुकुब्जादीनां दानं दत्त्वा छत्रचामराङ्कितो यावत्पुत्तलिकामस्तके पादपद्मं निदधाति तावत् पुत्तलिका मनुष्यवाचा राजानमब्रवीत्। भो राजन्! विक्रमस्य शौर्यौदार्य-सत्वादिक-सादृश्यं यदि विद्यते तर्हि अस्मिन् सिंहासने समुपविश। राजाऽब्रवीत्। हे पुत्तलिके! मम त्वयोक्तं सर्वमौदार्यादिकं विद्यते किं न्यूनमस्ति? मयाऽपि सर्वेषां अर्थिनां कालोचितं दत्तम्। भो राजन्! एतदेव तवानुचितं यत् स्वमुखेनैव आत्मानं कीर्त्तयसि यः स्वगुणान् कीर्त्तयति स केवलं दुर्जन एव सज्जनस्तु नैवं वक्ति। उक्तञ्च।

स्वगुणान् परदोषान् वा वक्तुं शक्नोति दुर्जनो लोके।
परदोषान् स्वगुणान् वा वक्तुं न शक्नोति सज्जनः सत्यम्॥१॥

अन्यच्च।

आयुर्वित्तं गृहच्छिद्रं मन्त्रमौषधसङ्गमे।
दानमानापमानञ्च नव गोप्यानि सर्वदा॥२॥

अतएव आत्मनो गुणाः आत्मना न स्तोतव्याः परेषां निन्दा न कर्तव्या। इति पुत्तलिकयोक्तं श्रुत्वा सविस्मयो

भोजराजा पुनः पुत्तलिकामवदत् सत्यमुक्तं त्वया यः स्वगुणान् कीर्त्तयति स मूर्ख एव । मया मद्गुणाः कीर्त्तिताः तदनुचितमेव । यस्य एतत्सिंहासनं तस्यौदार्यं कथय पुत्तलिका भणति भो राजन् ! एतत्सिंहासनं विक्रमार्कस्य स तु सन्तुष्टश्चेत् अर्थिजनेभ्यः कोटिसुवर्णं प्रयच्छति ।

निरीक्षिते सहस्रन्तु अयुतन्तूपजल्पते ।
महति लक्षदो भूपः सन्तुष्टः कोटिदः सदा ॥१ ॥

त्वयि औदार्यं विद्यते चेत् तर्ह्यस्मिन् सिंहासने उपविश राजा तूष्णीमासीत् ।

इति विक्रमार्कचरिते सिंहासनोपाख्याने अप्सरा-भोजसंवादे प्रथमोपाख्यानम् ।

## अथ द्वितीयोपाख्यानम् ।

पुनरपि राजा यावत् पुत्तलिकामस्तके पादपद्मं निदधाति । तावत् पुत्तलिका मनुष्यवाचा राजानमब्रवीत् । भो राजन् ! विक्रमस्य शौर्यौदार्यसत्वादिकसादृश्यं यदि विद्यते तर्हि अस्मिन् सिंहासने समुपविश । भोजराजो वदति स्म । भो पुत्तलिके ! कथय तस्य विक्रमस्यौदार्यवृत्तान्तम् सा कथयति । भो राजन् ! श्रूयताम् विक्रमादित्यः राज्यं पालयन् एकदा चारानाहूयाब्रवीत् । भो दूताः ! भवन्तः पृथिवीपरिभ्रमणं कुर्वन्तो यत्र यत्र कौतुकं तीर्थविशेषञ्च विलोकयन्ति तन्मम निवेदयन्तु । अहं तत्र गमिष्यामि । एवं काले गते एकदा देशान्तरं परिभ्रमन्नागतः कश्चि-

दूतो राजानमब्रवीत्। भो राजन्! चित्रकूटपर्वत निकटे तपोवनमध्ये अतिमनोहरं देवालयमस्ति। तत्र पर्वतोच्चस्थानात् विमला जलधारा पतति तत्स्नानं यदि क्रियते तर्हि सर्वेषां महापापानां क्षयो भवति। यस्तु महापापं करोति तस्याङ्गादतीव कृष्णमुदकं निःसरति यस्तत्र स्नानं करोति स पुण्यपुरुषः। अन्यच्च। तत्र कश्चिद्ब्राह्मणः महति होमकुण्डे हवनं करोति तस्य कियन्ति वर्षाणि अतीतानि इति न ज्ञायते। प्रतिदिनं कुण्डाद् बहिः स्थापितं भस्म पर्वताकारं सत् अस्ति। स ब्राह्मणः केनापि सह न सम्भाषते। एवमतिविचित्रतरं स्थानं दृष्टम्। तच्छ्रुत्वा च राजा एकाकी तेन सह तत् स्थानं गत्वा परमानन्दं प्राप्तोऽवादीत्। अहो अतिपवित्रमेतत् स्थानं अत्र साक्षाज्जगदम्बिका निवसति। एतत् स्थानं दृष्ट्वा मनो मे विमलं जातमित्युक्त्वा तत्रान्तरिक्षोदकस्नानं विधाय देवतां नमस्कृत्य यत्र ब्राह्मणो हवनं करोति तत्र गत्वा ब्राह्मणमवादीत्। भो ब्राह्मण! हवनं मारभ्य कतिवर्षाणि जातानि ब्राह्मणेनोक्तम्। यदा सप्तर्षिमण्डलं रेवतीनक्षत्रस्य प्रथमचरणे स्थितं तदा मया हवनं प्रारब्धं इदानीमश्विनीनक्षत्रे तिष्ठति होमं कुर्वतो वर्षशतमभूत्। तथापि देवता प्रसन्ना नाभवत्। तच्छ्रुत्वा राजा स्वयं देवतां स्मृत्वा होमकुण्डे आहुतिमक्षिपत्। तदापि देवी प्रसन्ना नाभूत्। तदनन्तरं राजा स्वशिरः कमलाहुतिं दास्यामि इति बुद्ध्या यावत्कण्ठे खड्गं करोति तावत् देवता अन्तराले खड्गं धृत्वा अवादीत्। भो राजन्! प्रस-

नास्ति वरं वृणीष्व। राज्ञा उक्तम्। भो देवि! ब्राह्मणोऽयं बहुकालं हवनं करोति अस्मिन् किमर्थं न प्रसन्ना भवसि। मम किमिति शीघ्रं प्रसन्नासि। तयोक्तम्। भो राजन्! हवन मयं करोति परमस्य चेतसि स्वार्थं नास्ति। अतः प्रसन्ना न भवामि। उक्तञ्च।

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घनैः।
व्यग्रचित्तेन यज्जप्तं त्रिविधं निष्फलं भवेत्॥ १॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यत्र सिद्धिर्भवति तादृशी॥२॥
न काष्ठे विद्यते देवो न पाषाणे न मृण्मये।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम्॥ ३॥

राजाऽवदत्। यदि मम प्रसन्ना जातासि तर्ह्यस्य ब्राह्मणस्य मनोरथान् पूरय। साब्रवीत्। भो राजन्! परोपकारी महाद्रुम इव स्वदेहकष्टं सहित्वा परश्रमोच्छेदं करोषि। उक्तञ्च।

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे।
फलन्ति हि परार्थे च सत्यमेते महाद्रुमाः॥ १॥
परोपकाराय वहन्ति नद्यः परोपकाराय दुहन्ति गावः।
परोपकाराय फलन्ति वृक्षाः परोपकाय शरीरमेतत्॥२॥

राजानं स्तुत्वा ब्राह्मणस्य मनोरथं पूरयति स्म। राजापि स्वपुरीमगात्।

इमां कथां कथयित्वा पुत्तलिका भोजमवदत्। राजन्! एवं विधं धैर्य्यं विद्यते चेत् तर्ह्यस्मिन् सिंहासने समुपविश। इति द्वितीयोपाख्यानम्।

## अथ तृतीयोपाख्यानम्।

पुनरपि राजा सिंहासने समुपवेष्टुं गच्छति ततोऽन्या पुत्तलिका समवदत्। भो राजन्! एतत्सिंहासने तेनैवाध्यासितव्यं यस्य विक्रमतुल्यमौदार्यमस्ति भोजेनोक्तम्। भो पुत्तलिके! कथय। तस्यौदार्यवृत्तान्तम्। सा वदति। श्रूयतां राजन्! विक्रमार्क सदृशो राजा भूमण्डले नास्ति। यस्य चेतसि अयं परः अयं मदीय इति विकल्पो नास्ति। स सकलमपि विश्वं पालयति।

अयं निजः परो वेति विकल्पो भ्रान्तचेतसाम्।
पुनस्तूदारचित्तानां वसुधैव कुटुम्बकम्॥ १॥

साहसे उद्यमे धैर्ये तत्समो नास्ति तस्मात् इन्द्रादयो देवाः अस्य साहाय्यं कुर्वन्ति स्म।

उद्यमः साहसं धैर्यं शक्तिर्बुद्धिः पराक्रमः।
षडेते यस्य तिष्ठन्ति तस्य देवोऽपि शङ्कते॥ १॥

राजन् यस्तु अर्थिनां मनोरथं पूरयति तस्येप्सितं देवः सम्पादयति।

कृते विनिश्चये पुंसां विष्णुः पूरयतीप्सितम्।
यदि स्यात् दार्ढ्यसम्पत्तिः सत्यं सत्यं हि मानव!॥

उत्साह सम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढ़निश्चयं च लक्ष्मी स्वयं वाञ्छति वासहेतोः॥

एवं सकल-गुणाधिवासः स विक्रमी राजा सर्वसम्पदा परिपूर्णः एकदा स्वमनसि अचिन्तयत्। अहो असारोऽयं संसारः कदा कस्य किं भविष्यतीति न ज्ञायते।

अतः उपार्जितं वित्तं दान भोगैर्विना सफलं न भवति। अतो वित्तस्य सत्पात्रे दानमेकं फलम्। अन्यथा नाशमेव प्राप्नोति।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते सति विभवे न तस्य तद्द्रव्यम्॥

अति पवनपवन विलुलितदीपशिखेव चञ्चला लक्ष्मीः।
उपार्जितानां वित्तानां त्यागायैव हि कारणम्।
तटाकोदरसंस्थानं परीवाह इवाम्भसाम्॥

इत्येवं विचार्य सर्वस्वदक्षिणं यज्ञं कर्त्तुं उपक्रान्तवान्। ततः शिल्पिभिरतीव मनोहरो मण्डपः कारितः। सर्वापि यज्ञसामग्री सम्पादिता। देव मुनिगन्धर्वयक्षसिद्धादयः समाहूताः। तस्मिन्नवसरे समुद्राह्वानार्थं कश्चिद् ब्राह्मणः समुद्रतीरे प्रेषितः। सोऽपि समुद्रतीरं गत्वा गन्धपुष्पादि षोड़शोपचारं विधायाब्रवीत्। भो समुद्र! विक्रमार्को राजा राज्यं करोति तेन प्रेषितोऽहन्त्वामाहर्त्तुं समागत इति जलमध्ये पुष्पाञ्जलिं दत्वा क्षणं स्थितः। कोऽपि तस्य प्रत्युत्तरं ददौ। तदोज्जयिनीं यावत् प्रत्यागच्छति तावत् देदीप्यमानशरीरः समुद्रो ब्राह्मणरूपी सन् तमागत्यावदत्। भो ब्राह्मण! विक्रमेण अस्मान् आह्वातुं प्रेषितस्त्वं तर्हि तेन या सम्भावना कृता सा अस्माकं प्राप्तैव। एतदेव सुहृदो लक्षणं यत् समये दानमानादि क्रियते। उक्तञ्च।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्गुणं प्रीति लक्षणम्॥ १॥

दूरस्थितानां मैत्री नश्यति समीपस्थानां वर्द्धते इति न वाच्यम्। अत्र स्नेह एव प्रमाणम्।

दूरस्थोऽपि समीपस्थो यो वै मनसि वर्त्तते।
यो वै चित्तेन दूरस्थः समीपस्थो हि दूरतः॥ १॥
गिरौ कलापी गगने च मेघो लक्षान्तरेऽर्कः सलिले च पद्मम्।
द्विलक्षदूरे कुमुदस्य नाथो यो यस्य मित्रं न हि तस्य दूरम्॥

तस्मात् सर्वथा गन्तव्यं मे। किन्तु ममात्र किञ्चित्प्रयोजनमस्ति। तस्मै राज्ञे त्वयार्थमेतद्रत्नचतुष्टयं दास्यामि। एतेषां माहात्म्यम्। एकं रत्नं यद्वस्तु स्मर्य्यते तद्ददाति। द्वितीयरत्नेन भोजनादिकं अमृततुल्यमुत्पद्यते। तृतीयरत्नात् अश्वरथपदातियुतं चतुरङ्गबलं भवति। चतुर्थाद्रत्नात् दिव्याभरणानि जायन्ते तदेतानि रत्नानि गृहीत्वा राज्ञो हस्ते प्रयच्छ। ततो ब्राह्मणस्तानि रत्नानि गृहीत्वा उज्जयिनीं यावदागतस्तावद् यज्ञ समाप्तिर्जाता। राजा अवभृतस्नानं कृत्वा सर्वान् अर्थिजनान् परिपूर्णमनोरथान् अकरोत्। ब्राह्मणो राजानं दृष्ट्वा रत्नान् अर्पयित्वा प्रत्येकं तेषां गुणकथनमकथयत्। ततो राजा अवदत्। भो ब्राह्मण! भवान् यज्ञदक्षिणकालं व्यतिक्रम्य समागतः। मया सर्वोऽपि ब्राह्मणसमूहो दक्षिणया तोषितः। तर्हि त्वं एतेषां चतुर्णां मध्ये यत् तुभ्यं रोचते तद् गृहाण। ब्राह्मणेनोक्तम्। गृहङ्गत्वा गृहिणीं पुत्रं स्नुषाञ्च पृष्ट्वा सर्वेभ्यो यद्रोचते तद्ग्रहीष्यामि। राज्ञोक्तम्। तथा कुरु। ब्राह्मणोऽपि स्वगृहमागत्य सर्वं वृत्तान्तं तेषामग्रे अकथयत्। तच्छ्रुत्वा पुत्रेणोक्तम्। यद्रत्नं चतुरङ्गबलं

ददाति। तद्ग्रहीतव्यम:। यतः सुखेन राज्यं कर्तुमायाति। पित्रोक्तम्। बुद्धिमता राज्यं न प्रार्थनीयम्।

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम्।
सौदास्यं तदवस्थमर्जुनवधं संचिन्त्य लोकेश्वरं
दृष्ट्वा राज्यकृते विड़म्बनगतं तस्मात् न तद्वाञ्छयेत्॥

पुनः पिता वदति यस्माद्धनं लभ्यते तद्गृहाण धनेन सर्वमपि लभ्यते।

न तदस्ति जगत्यस्मिन् यद्धनेन न लभ्यते।
निश्चित्य मतिमान् तस्मात् अर्थमेकं प्रसाधयेत्॥

भार्ययोक्तम्। यद्रत्नं षड्रसान् सूते तद्गृह्यताम्। सर्वेषां प्राणिनामन्नेनैव प्राणधारणं भवति। उक्तञ्च

अन्नं विधात्रा विहितं मर्त्यानां जीवधारणम्।
तस्मादन्नात्परं किञ्चित् प्रार्थये न कदाचन॥

स्नुषयोक्तम्। यद्रत्नं रत्नाभरणादिकं सूते तद्ग्राह्यं

भूषयेत् भूषणै रम्यैर्यथा विभवमादरात्।
शुचि सौभाग्यवृद्ध्यर्थमायुर्लक्ष्म्यभिवृद्धये।
सुहृत्सु शुभदं नित्यं वास एव विभूषणम्॥
रत्नैश्च देवता तुष्टिर्भूषणस्यापि धारणात्।

एवं चतुर्णां परस्परं विवादो लग्नः ततो ब्राह्मणो राजसमीपमागत्य चतुर्णां विवादवृत्तान्तमकथयत्। राजापि तच्छ्रुत्वा तस्मै ब्राह्मणाय चत्वार्यपि रत्नानि ददौ इयि कथां कथयित्वा पुत्तलिका राजानमवदत्। भो राजन्! औदार्यं नाम सहजो गुणः नतु औपाधिकः।

चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेषु च।
यथेक्षुदण्डे माधुर्यं औदार्यं सहजं तथा॥

त्वयि एवं विधमौदार्यं विद्यते चेत्तर्हि अस्मिन् सिंहासने समुपविश। इति अप्सरा भोजसंवादे तृतीयोपाख्यानम्।

## अथ चतुर्थोपाख्यानम्।

पुनरन्या पुत्तलिका वदति स्म। भो राजन्! श्रूयताम्। विक्रमादित्ये राज्यं कुर्वति एकदा ब्राह्मणः कश्चित्सकलविद्या विचक्षणः समस्तगुणगणालङ्कृतोऽपि अपुत्रः समभवत्। एकदा भार्यया भणितम्। भो प्राणेश्वर! पुत्रं विना गृहस्थस्य गतिर्नास्तीति स्मृतिविदो वदन्ति तथाहि।

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च।
तस्मात् पुत्रमुखं दृष्ट्वा पुत्राद्भवति तापसः॥
शर्वरी दीपकश्चन्द्रः प्रभाते दीपको रविः।
त्रैलोक्य दीपको धर्मः सत्पुत्रः कुलदीपकः॥
नारी भाति मदेन कं जलरुहै पुर्णेन्दुना शर्वरी।
शीलेन प्रमदा जवेन तुरगी नित्योत्सवैर्मन्दिरम्॥
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः।
सत्पुत्रेण कुलं तथा वसुमतीलोकत्रयं भानुना॥

ब्राह्मणेनोक्तम्। भो प्रिये! सत्यमुक्तं त्वया परं परोद्यमेन द्रव्यं लब्धुं शक्यते। गुरुशुश्रूषया विद्यापि लभ्यते यशः सन्ततिश्च परमेश्वराराधनं विना न सिध्यति। उक्तञ्च

निरन्तरा सुखापेक्षा हृदये यदि विद्यते।
कृत्वा भावं दृढतरं भवानीवल्लभं भजेत्॥

भार्ययोक्तम्। भवान् सर्वज्ञः अतः परमेश्वरप्रसादार्थं किमपि व्रतादिकमनुष्ठेयं तेनोक्तम्।

मयाप्यङ्गीकृतमेव त्वद्वचनं कुतः।
युक्तियुक्तमुपादेयं वचनं बालकादपि।
विदुषापि सदा ग्राह्यं वृद्धादपि न दुर्वचः॥

इत्युक्त्वा ब्राह्मणः परमेश्वरप्रीत्यर्थं रुद्रानुष्ठानं कृतवान्। ततः एकदा रात्रौ तं ब्राह्मणं स्वप्ने जटामुकुटधारी वृषभवाहनस्थितः परमेश्वरः प्रत्यक्षीभूय उवाच।

भो ब्राह्मण! त्वं प्रदोषव्रतमाचर तेन व्रताचरणेन तव पुत्रो भविष्यति। ततः प्रभाते ब्राह्मणेन वृद्धानां पुरतः स्वस्वप्नवृत्तान्तः कथितः। तैरुक्तम्। भो ब्राह्मण! यथार्थोऽयं स्वप्नः उक्तञ्च

स्वप्नाध्याये।

देवो द्विजो गुरुर्गावः पितरो लिङ्गिनो नृपः।
यद्वदन्ति वचः स्वप्ने तत्तथैव विनिर्दिशेत्॥
अस्मिन् व्रतेऽनुष्ठिते तव पुत्रो भविष्यति।

तेषां वचनं श्रुत्वा ब्राह्मणो मार्गशीर्षे शुक्लत्रयोदशीतिथौ शनिवारे कल्पोक्तविधिपूर्वकं प्रदोषव्रतमनुष्ठितवान्। तेन व्रताचरणेन परमेश्वरः प्रसन्नो भूत्वा पुत्रमस्मै प्रायच्छत्। तदनन्तरं पुत्रे जाते तस्य पुत्रस्य ब्राह्मणो जातकर्म विधाय द्वादशदिवसे तस्य देवदत्त इति नामकरणं कृत्वा अन्नप्राशनाद्युपनयनान्तानि कर्माण्यकार्षीत्। ततः

उपनीतं वेदशास्त्रादिकं शिक्षयित्वा षोड़शे वर्षे गोदानानन्तरं विवाहं कारयित्वा स्वयं तीर्थयात्रां कर्तुकामः पुत्राय बुद्धिमुपदिशति।

भो पुत्र! अतिकष्टां दशां प्राप्तोऽपि स्वधर्माचारं न परित्यज। परैः सह विवादं मा कुरु। सर्वभूतेषु दया कार्या। परमेश्वरे भक्तिर्विधेया। परस्त्री नावलोकनीया। बलवद्विरोधं मा कुरु। मर्मज्ञेषु अनुवृत्तिर्विधेया। प्रस्तावसदृशं वक्तव्यम्। स्ववित्तानुसारेण व्ययः करणीयः। सज्जनाः सेवनीयाः। दुर्जनाः परिहर्त्तव्याः। स्त्रीणां गुह्यं न वक्तव्यं एवमनेकधा पुत्राय हितमुपदिश्य स्वयं वाराणसीं जगाम। देवदत्तोऽपि पितुरुपदेशं परिपालयन् तत्रैव नगरे स्थितः एकदा होमसमिधाहरणार्थं महारण्यं प्रविष्टो यावत् समिधाश्छिनत्ति तावद्विक्रमार्को राजा मृगयार्थं वनं गतः। सूकरमनुधावन् महारण्यं प्रविष्टः पुरः मार्गमजानन् देवदत्तं दृष्ट्वा नगरमार्गमपृच्छत्। तेन दृष्टो देवदत्तः स्वयमग्रे गच्छन् राजानं नगरमानयत्। ततो राजा देवदत्तं बहुधा सम्मान्य कस्मिंश्चिद्व्यापारे नियुक्तवान् तदनन्तरं कालो महान् गतः। एकदा राज्ञा भणितम्। कथमहं देवदत्तकृतोपकारादुत्तीर्णो भविष्यामि। यदनेन महतोऽरण्यमध्यात् ग्राममानीतः। तस्मिन्नवसरे केनचिदुक्तम्। अहोऽयं सत्पुरुषः कृतमुपकारं न विस्मरति। तदुक्तम्।

प्रथमवयसि तोयं पीतमल्पं स्मरन्तः
शिरसि निहितभारा नारिकेलीफलानाम्।

उदकममृतकल्पं दद्युराजीवनान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥

ब्राह्मणेन तद्राजवचनं श्रुत्वा स्वमनसि विचारितम्।

अहो राजा एवं वदति। तत्सत्यं वा मिथ्या वा अस्य प्रत्ययो द्रष्टव्य इति भणित्वा राजकुमारं केनाप्यविदितं स्वमन्दिरे सङ्गोप्य तस्यालङ्कारं भृत्यहस्ते दत्त्वा नगरमध्ये विक्रयार्थं प्रेषितम्। तस्मिन् अवसरे राजमन्दिरे राजपुत्रः केनापि चौरेण मारित इति महान् कोलाहलो जातः। राज्ञापि स्वपुत्रमार्गणाय सर्वेऽधिकारिणः प्रेषिताः। ततस्ते यावद्विपणि मध्ये विलोकयन्ति तावदाभरणहस्तो देवदत्तभृत्यो दृष्टः। ततस्तद् आभरणं राजकुमारस्येति ज्ञात्वा तं बद्ध्वा राजसकाशं निन्युः। पश्चात् भृत्याः कथयन्तिस्म रे पापाचार! कथमेतदाभरणं तव हस्ते समागतं तेनोक्तं मम हस्ते देवदत्तेन ब्राह्मणेन दत्तं तस्याहं भृत्यः। विपणि मध्ये एतदाभरण विक्रयेण धनमानयेति कथितञ्च। ततो राज्ञा देवदत्त आकारितो भणितश्च। भो देवदत्त! एतदाभरणं तव हस्ते केन दत्तम्। देवदत्तेनोक्तम्। न केनापि दत्तम्। अहमेव धनलोलुपस्तव कुमारं हत्वा तदाभरणानि सर्वाणि गृहीत्वा तन्मध्ये इदमेकमाभरणमस्य हस्ते विक्रेतुं दत्तम्। इदानीं तुभ्यं यद्रोचते तत् कुरु मम कर्मवशादेवंविधा बुद्धि रभूदिति भणित्वा अधोमुखो बभूव। तद्वचनं श्रुत्वा राजा तूष्णीमवस्थितः। तदा सभामध्ये कैश्चिदुक्तम्। अहोऽयं सर्व धर्मशास्त्र-वेत्तापि कथमीदृशे पापकर्मणि बुद्धिमकरोत्। अन्यैरुक्तम्।

किञ्चितं स्वकर्म्मणा प्रेरितस्यैवं बुद्धिर्जाता। उक्तञ्च।

किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्म्मणा।
प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी।

तत्र सभ्यैर्भणितम्। भो राजन्! अयं बालघाती पुनः स्वर्णस्तेयी च अतः खादिरेण शूलेन हन्तव्यः। ततः अन्यैर्मन्त्रिभि रुक्तम्। अमुं शतखण्डं कृत्वा अस्य मांसेन गृध्राणां बलिर्दातव्यः। तेषां वचनं श्रुत्वा राज्ञा भणितम्। भो सभ्याः! अयं ममाश्रितः पुरा मार्गदर्शनादुपकारी च। अतः सत्पुरुषेण आश्रितानां गुणदोषचिन्ता न कार्या। तथा चोक्तम्।

चन्द्रः क्षयी प्रकृति वक्रतनुर्जड़ात्मा
दोषाकरो भवति मित्र विपत्तिकाले।
मूर्द्धा तथापि विधृतः परमेश्वरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता॥

अन्यच्च।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते॥ १॥

इत्युक्त्वा देवदत्तं प्रति भणति स्म। भो देवदत्त! त्वं चेतसि किमपि भयं मा कार्षीः। मम पुत्रो बलीयसा प्राक्तनेन कर्म्मणामारितः। त्वया किं कृतम्। यतः प्राकृतं कर्म्म कोऽपि लङ्घयितुं न शक्नोति।

माता लक्ष्मी पिता विष्णुः स्वयञ्च विषमायुधः।
तथापि शम्भुना दग्धः प्राकृतं केन लङ्घ्यते॥ १॥

अन्यच्च। महारण्ये पतितं मां नगरं नीतवती महो-

पकारिणस्तव प्रत्युपकार सहस्रै रप्युत्तीर्णो न भवामि इति समाश्वास्य वस्त्राभरणादिना देवदत्तं सभाज्य विससर्ज। देवदत्तोऽपि तं कुमारमानीय राज्ञे ददौ। ततः सविस्मयेन राज्ञा भणितम्। किमिदमिति। देवदत्तेन उक्तम्। कृतोपकारात् कथमपि उत्तीर्णो न भवामीति पूर्वं त्वयोक्तम्। तत्तव स्वभावनिरीक्षणार्थं मया एवं कृतम्। त्वयि प्रत्ययो दृष्टश्च राज्ञोक्तम्। यः कृतमुपकारं विस्मरति स पुरुषाधम एव। देवदत्तेनोक्तम्। भो राजन्! कारणं विनापि सकलजगदुपकारी भवान् अतस्त्वमेव सुजनो लोके तथा चोक्तम्।

सुजनाः सुधनास्ते हि कृतिन सुखिनस्तथा।
जन्तवो ये हि जीवन्ति परस्य हितकाम्यया॥

इति कथां कथयित्वा पुत्तलिका राजानमवदत्। एवं परोपकार्यौदार्याणि विद्यन्ते त्वयि तर्हि अस्मिन् सिंहासने समुपविश। भोजराजः तूष्णीमासीत्।

---

## अथ पञ्चमोपाख्यानम्।

पुनरन्ययोक्तं भो राजन्! श्रूयताम्। विक्रमार्के राज्यं कुर्वति एकदा कश्चिद्रत्नवणिक् समागत्य रत्नमनर्घ्यमेकं राजहस्ते समर्पितवान्। राजापि देदीप्यमानं तद्रत्नं दृष्ट्वा परीक्षकानाकार्यावदत्। भो परीक्षकाः! कीदृशमेतद्रत्नं समीचीनं असमीचीनं वा अस्य मौल्यं कुर्वन्तु। तैस्तद्रत्नं परीक्ष्य भणितं भो राजन्! अमौल्यमेतद्रत्नम्। अत्र

मौल्यमविदित्वापि क्रीयते चेत् तर्हि महाप्रत्यवायोऽस्माकं भविष्यति। तेषां वचनं श्रुत्वा राज्ञा भूरिद्रव्यं दत्वा भणतिस्म। भो वणिक् ईदृशं रत्नमन्यदस्ति किम्? देव! एतत्सदृशानि रत्नानि इह आनीतानि न सन्ति। परं ग्रामे एवंविधान्येव दशरत्नानि विद्यन्ते। यदि प्रयोजनमस्ति तर्हि तेषां मौल्यं कृत्वा गृह्यताम्। ततः परीक्षकै एकैकस्य रत्नस्य षट् कोटिसुवर्णं मौल्यं कृतम्। राज्ञा तावत्सुवर्णं तस्मै वणिजे दत्तं तेन सह विश्वासी कश्चिद्भृत्यश्च प्रेषितः। उक्तश्च। भो मणिकार! अष्टानां वासराणां मध्ये रत्नानि गृहीत्वा आयास्यसि चेदुचितं तव दास्यामि। तेनोक्तम्। देव! अष्टानां दिवसानां मध्ये एव चरणौ द्रक्ष्यामि। अन्यथा चेत् दण्ड्योऽहम्। एवमुक्त्वा स मणिकारस्तेन वणिजा सह तस्य निवास नगरङ्गतः। तत्र तेन दशरत्नानि दत्तानि। तानि गृहीत्वा मार्गे यावदागच्छति तावन्महती वृष्टिरभूत्। तया वृष्ट्या उभयतटपरिपूर्णा नदी प्रवहति ततः अपरं तीरं गन्तुमशक्नुवन् तत्र तटस्थितं नाविकमवदत्। भो कर्णधार! मां नदीं उत्तारय। सोऽवदत्। हे पथिक! एषा नदी वेलामतिक्रम्य वर्तते। कथमुत्तार्यते। प्रवलनद्युत्तरणं बुद्धिमता वर्जनीयम्।

महानदी प्रतरणं महापुरुष विग्रहम्।
महाजन विरोधञ्च दूरतः परिवर्जयेत्॥ १॥
चरिते योषितां पूर्णे सरित्तोये नृपादरे।
सर्वत्रैव वणिक् स्नेहे विश्वासं नैव कारयेत्॥ २॥
नदीनाञ्च नखीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।

विश्वासो नैव कर्तव्यो: स्त्रीषु राजकुलादिषु ॥ २ ॥

मणिकारेणोक्तम्। भो कर्णधार! त्वया यदुक्तं तत् सत्यमेव। तथापि मम महत्कार्यमस्ति सामान्यकार्याद्विशेषकार्यं बलवद्भवति।

सामान्यकार्यतो नूनं विशेषो बलवान् भवेत्।
परेण पूर्वबाधोवा प्रायशो दृश्यतामिह ॥ १ ॥

अतः मम नद्युत्तरणं सामान्यम्। राजकार्यं बलवत्। कर्णधारेणोक्तम्। महद्राजकार्यं तत् किम्? मणिकारेणोक्तम्। अद्य दशरत्नानि गृहीत्वा राजसमीपं नागमिष्यामीति चेत् आज्ञाभङ्गाद्राजा निग्रहं करिष्यति नाविकेनोक्तम्। तर्हि तेषां रत्नानां मध्ये मह्यं पञ्चरत्नानि दास्यसि चेत्तर्हि त्वां नदीमुत्तारयिष्यामि। ततो मणिकारस्तस्मै नाविकाय पञ्चरत्नानि दत्त्वा नदीमुत्तीर्य्य राजसमीपमागत्य तस्य हस्ते पञ्चरत्नानि ददौ। राजाऽब्रवीत्। भो मणिकार! किं पञ्चैव रत्नानि समानीतानि। अवशिष्टानि पञ्च किं कृतानि मणिकारेणोक्तम्। देव! श्रूयतां विज्ञाप्यं मे। अस्मान्नगरात् निर्गत्य तेन वणिजा सह तन्नगरं गत्वा तेन दत्तानि दशरत्नानि गृहीत्वा ततो निर्गत्य यावदागच्छामि तावन्मार्गे प्रबलवृष्ट्या नदी उभयतटं विलङ्घ्य प्रबलोदका प्रवहति। अष्टानां दिनानां मध्ये स्वामिचरणौ द्रष्टव्यौ। नदी दुस्तरा इति विचार्य नद्युत्तरणाय नाविकस्य पञ्चरत्नानि दत्तानि पञ्च देवसमीपमानीतानि। यद्यष्टदिनानां मध्ये नागम्यते चेत् आज्ञा भङ्गात् स्वामिनश्चेतसि दुःखं स्यात्। उक्तञ्च।

आज्ञा भङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् ।
पृथक् शय्या च नारीणां अशस्त्र वध उच्यते ॥ १ ॥

इति विचार्य दत्तानि । राजाऽपि तद्वचनं श्रुत्वा सन्तुष्टः सन् अवशिष्टानि पञ्चरत्नानि तस्मै मणिकाराय ददौ । इति कथां कथयित्वा पुनर्भोजमवदत् पुत्तलिका । परमौदार्यगुणवशिष्टो विक्रमादित्यः । त्वयि एतादृशमौदार्यं विद्यते तर्ह्यस्मिन् सिंहासने समुपविश ।

---

## अथ षष्ठोपाख्यानम् ।

पुनः अन्या पुत्तलिका अब्रवीत् । श्रूयताम् राजन् ! विक्रमार्कः राज्यं कुर्वन् एकदा चैत्रमासे वसन्तोत्सवे सकलान्तःपुरवधूसमेतः क्रीड़ार्थं शृङ्गार वनमगमत् । नानाविधतरु शोभिते तस्मिन् शृङ्गारवने इन्द्रनीलखचितभित्ति-रमणीय-चन्द्रकान्त-शिला-विनिर्मिताङ्गणे नानाविध धूपवासिते क्रीड़ागृहीत-पद्मिनी-प्रभृति चतुर्विधवनिताभिर्वस्त्र-ताम्बूल-पुष्पालङ्कृताभिः सह राजा चिरं क्रीड़ामकार्षीत् । तद्वनसमीपे चण्डिकायतनमेकमासीत् । तत्र स्थितः कश्चिद्ब्रह्मचारी राजानं तत्रागतं विलोक्य स्वमनसि चिन्तयति स्म । अहो तपः कुर्वता मया जन्म वृथैव नीयते । स्वप्नेऽपि विषयसङ्गमजन्मसुखं नानुभूयते । उक्तञ्च ।

यद्यत्सुखं विषय सङ्गम जन्म तच्च
दुःखाय सृष्टमिति मूर्खविचारणेव ।

को नाम संपरिहरेत् सितशर्कराय
भीतः पतेत सुषमित्रकथान् मनुष्यः ॥
तस्मात् महत्कष्टं कृत्वापि संसारे स्त्रीसुख मनुभोक्तव्यम् ।
असारे खलु संसारे पूज्याशा रक्तलोचना ।
तदर्थे धनमिच्छन्ति तत्त्यागे च धनेन किम् ॥ १ ॥
असारभूते संसारे सारभूता नितम्बिनी ।
इति सञ्चिन्त्य वै शम्भुरर्द्धाङ्गे पार्वतीं दधौ ॥ २ ॥

विक्रमार्को राजा प्रसङ्गतोऽत्र समागतोऽस्ति । तस्मात् तं एकमग्रहरं याचित्वा काञ्चन कन्यकां विवाह्य संसारसुखमनुभविष्यामीति विचार्य्य राजसमीपमागत्य ।

पञ्चास्य पञ्चवदने हिमशैलजाया
रत्युत्सवे युगपदास्य रसं जिघृक्षौ ।
त्वां पातु संकलित विभ्रम कर्णपूर
लोलद्द्समदभ्रमर विभ्रमभृत्कटाक्षः ॥

इत्याशीर्वादं ददौ। ततो राजा तमासने समुपवेशयित्वाब्रवीत्। भो ब्राह्मण! कुतः समागतोऽसि तेनोक्तम्। अहमत्रैव जगदम्बिकापरिचर्यां कुर्वन् तिष्ठामि। नित्यमस्याः सेवां कुर्वतो मे पञ्चाशद्वर्षाणि गतानि। तावत्कालं अहं ब्रह्मचारी। अद्य देवता निशावसाने मां समागत्याभणत्। भो ब्राह्मण! त्वमेतावन्तं कालं मम परिचर्य्यया आन्तोऽसि तवाहं प्रसन्ना जातास्मि। तर्हि इदानीं गृहस्थाश्रमं स्वीकुरु पुत्रमुत्पाद्य पश्चात्मनो मोक्षे निधेहि। अन्यथा तव गतिर्नास्ति।

आश्रमात् तीनपाक्षत्य यो मोक्षेऽस्मनिर्वेशयेत्।

अनया क्रियया मोक्षं वेप्समानः पतत्यधः॥

आदौ ब्रह्मचारी ततो वनी च भूत्वा प्रव्रजेति। अथ विक्रमार्के भूपती कथितं चेत् तव मनोरथं स पूरयिष्यतीति एवं देव्या स्वप्ने भणितम्। अतस्तव समीपमागतोऽस्मि इत्येवं कपटवचनैः राजानमुक्तवान्। तच्छ्रुत्वा राजा स्वमनसि अचिन्तयत्। असावेव अनृतं वदति। अस्तु तथाप्यर्थी वर्त्तते सर्वथास्य मनोरथः पूरणीयः।

दत्त्वार्त्ताय नृपो दानं शून्यं लिङ्गं प्रपूज्य च।
परिपाल्याश्रितं नित्यं अश्वमेधफलं लभेत्॥ १॥

इति विचार्य तत्र नगरमेकं कारयित्वा तमभिषिच्य च तस्मिन्नगरे संस्थाप्य विलासिनीनां शतमदात्। पश्चाच्छतगजान् चतुरङ्गाणां पञ्चशतीं भट्टानां चतुःसहस्रीं तस्मै ब्राह्मणाय दत्त्वा चण्डिका पुरमिति तस्य नगरस्य नाम कृतम्। ततः परिपूर्णमनोरथो ब्राह्मणस्तं राजानमाशीभिरर्थयामास। अथ राजा निजनगरमगमत्। इति कथां कथयित्वा पुत्तलिका राजानमब्रवीत्। भो राजन्! त्वयि एवमौदार्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश।

---

## अथ सप्तमोपाख्यानम्।

पुनरन्या भोजं प्रति विक्रमकथां कथयति। विक्रमार्के राज्यं कुर्वति सर्वोऽपि जनः सुखेना-

सीत्। लोके दुर्जनकण्टको नास्ति। सदाचारवन्तः सर्वे जनाः ब्राह्मणाः वेदशास्त्राभ्यास-स्वधर्माचार पराः षट् कर्म्म निरता बभूवुः। सर्वस्यापि वर्णस्य सिद्धौ यशसि चाभिरुचिः परोपकारकरणे वासना असत्ये अप्रणयः लोभे द्वेषः परापवादे अनादरः जीवदयायां अनुरागः परमेश्वरे भक्तिः। देहे निर्ममता नित्यानित्यवस्तुनि विचारः परत्र विषये बुद्धिः वाचि सत्यम्। उक्तिपरिपालने दार्ढ्यं हृदये औदार्यगुणः। एवं सर्वोऽपि लोकः सद्वासनाश्रितः पवित्रीभूतान्तःकरणो राज्ञः प्रसादात् सुखेन वर्त्तते। तस्मिन्नगरे धनदो नाम कश्चिद् वणिक् अस्ति तस्य सम्पत्तेर्मर्यादा नास्ति येन यद्वस्तु चिन्त्यते तद्वस्तु तस्य गृहे लभ्यते। एवं सकलसम्पदाश्रयस्य वणिजः सर्ववस्तुषु अनित्यत्वबुद्धिरुत्पन्ना। असारोऽयं संसारः सर्वं सुदुर्लभमपि वस्तुजातमनित्यम्।

गगन नगर कल्पं सङ्गमं वल्लभानां
जलदपटलतुल्यं यौवनं वा धनं वा।
स्वजनसुत शरीरादीनि विद्युच्चलानि
क्षणिकमिति समस्तं विद्धि संसारवृत्तम्॥ १॥

शरणमशरणं वा बान्धवो बन्धमूलं
शरणमपि तदाराद्वारमापद्ग्रहाणाम्।
विकलितमति पुत्राः शत्रवः सर्वमेतत्
त्यजत भजत धर्मं निर्मलं कर्मपाशान्॥ २॥

अतः संसारिणां धर्म एव शरणं तथा चोक्तम्।

धर्मो रक्षति रक्षितो ननु हतो हन्ति ध्रुवं प्राणिनो
हन्तव्यो न ततः स एव शरणं संसारिणां सर्वथा।

धर्मः प्रापयतीह सम्पदमपि ध्यायन्ति तद्योगिनो
नोधर्मात् सुहृदस्ति नैव सुखिनो नोपण्डिता धार्मिकात् ॥
तथा च।
धर्मः शर्म भुजङ्गव पुरोसारं विधातुं क्षमो
धर्मोमर्त्यजनस्य च ददत् प्रीतिं तदा शाश्वतीम्।
धर्मः स्वर्गनरो निरन्तर सुखास्वादोदयस्यास्पदम्
धर्मः किं न करोति मुक्ति वनितां सम्भोग योग्यान्तनुम् ॥

अतो धर्मसंग्रहार्थं उपार्जितं द्रव्यं सत्पात्रे दातव्यं बुद्धिमता। तस्मिन्नर्पितं तत् बहुगुणं भवति।
पात्रविशेषे न्यस्तं गुणान्तरं भजति वित्तं तद्दातुः
जलमिव समुद्र शुक्तौ मुक्तां फलति पर्यादस्य।
न्यग्रोधस्य यथा बीजः स्तोकं सुक्षेत्रभूमिगम्।
बहुविस्तीर्णतां याति तद्वद् दानं सुपात्रगमिति ॥

बहुधा विचार्य श्रोत्रियान् ब्राह्मणानाहूय तेभ्यः सकाशात् हेमाद्रिप्रतिपादितानि दानखण्डोक्त-गोदान-कन्यादान विद्यादान-भूदानोदकदानानि श्रुत्वा तानि दानानि सत्पात्रे समर्प्य पवित्रान्तःकरणः सन् पुनर्विचारयति स्म। मये-तदनुष्ठितं दानव्रतादिकं तदा सफलं भविष्यति यदा द्वारावतीं गत्वा कृष्णं द्रक्ष्यामीति विचार्य द्वारावतीं प्रति निर्गतः। समुद्रतीरं गत्वा नाविकमाहूय तस्मै भूरिद्रव्यं दत्वा भिक्षुकयोगिविदेशस्थजनानाथादीनारोप्य तैः सह प्रियवचनानि धर्मगोष्ठीः कुर्वन् यावद् गच्छति तावत्समुद्रमध्ये कश्चित् क्षुद्रपर्वतो दृष्टः। तत्र पर्वते महदेकं देवालयमासीत्। ततो देवालयं गत्वा देवीं भुव-

नेश्वरीं षोड़शोपचारै रभ्यर्च्य नमस्कृत्य च यावत्तस्या वामभागे दृष्टिं निदधाति तावच्छिन्न शीर्षं स्त्रीपुरुषयोर्युगलं दृष्ट्वा पुरस्थितभित्तिभागे लिखितान् अक्षरान् अपश्यत्। यः कोऽपि परोपकारी महाधैर्यसम्पन्नः स्वकण्ठरुधिरेण भुवनेश्वरीमर्चयति तदैत् स्त्रीपुरुषयुगलं सजीवं भविष्यति। एवं लिखितं वाचयित्वा सविस्मयो धनदः पुनरपि नावमारुह्य द्वारावतीं गतः कृष्णं दृष्ट्वा प्रणम्य स्तौति।

एकोऽपि कृष्णस्य सकृत्प्रणामो दशाश्वमेधावभृतेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय॥ १॥

इति स्तुत्वा श्रीकृष्णस्य षोड़शोपचार पूजां विधाय निज नगरमगमत्। सर्वान् बन्धून् कृष्णप्रसाद दानेन सम्भाव्य किमप्य पूर्वं वस्तु गृहीत्वा राज दर्शनार्थं गतः।

रिक्तपाणिस्तु नोपश्येद्राजानं देवतां गुरुम्।
नैमित्तिकं विशेषेण फलेन फलमादिशेत्। तथा च।

दृष्टां भार्यां प्रियं मित्रं पुत्रं चाति कनीयसम्।
रिक्त पाणिर्नपश्येत् तु तथा नैमित्तिकं नरम्॥ २॥

तथा राज्ञो हस्ते कृष्णप्रसादं भेटकञ्च दत्त्वोपविष्टः ततो राजा क्षेमयात्राञ्च पृष्ट्वा तं धनदं कमप्य पूर्ववृत्तान्तमपृच्छत्। सोऽपि समुद्रमध्य स्थित भुवनेश्वरी देवालय वृत्तान्तमकथयत्। तच्छ्रुत्वा सविस्मयो राजा तेन धनदेन सह तत् स्थानं गत्वा देवालये देवता वामभागे स्थितं कबन्धयुगलमपश्यत्। तदनन्तरं देवतां मनसि कृत्वा स्वकण्ठे खड्गं यावत् करोति तावत्कबन्धद्वयं सशिरस्कं स

जीवमभवत्। देवतापि राज्ञो हस्तात् खड्गं आकृष्यात्रवीत्। भो राजन्! प्रसन्नास्मि वरं वृणीष्व। राजाब्रवीत्। भो देवि! यदि प्रसन्नासि तर्ह्यस्मै मिथुनाय राज्यं देहि। ततो देव्या तस्मै मिथुनाय राज्यं दत्तम्। राजापि धनदेन सह निजनगरमगमदिति कथां कथयित्वा पुत्तलिका भोजं प्रति भणति। भो राजन्! चेत् त्वय्येवं परोपकार करण शक्तिः विद्यते तर्ह्यस्मिन् सिंहासने समुपविश।

---

## अथ अष्टमोपाख्यानम्।

पुनरन्या पुत्तलिकाब्रवीत्। शृणु राजन्! विक्रमो राजा भूमण्डले प्रसिद्धः नानाविनोदाश्चर्य पूर्णः तथा परकौतुकादिकं चारमुखेन जानाति।

गावो गन्धेन पश्यन्ति वेदेनैव द्विजातयः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ १॥

श्रूयतां राजन्! यो राजा भवति तेन सर्वापि लोकाधिस्थितिर्ज्ञातव्या। सर्वस्य चित्तं ज्ञातव्यं प्रजाः सम्यक् पालनीयाः दुष्टाः दण्डनीयाः न्यायेन धनोपार्जनं कर्त्तव्यं अर्थिषु समत्वं तान्येव राज्ञः पञ्च महायज्ञकर्माणि।

दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोशस्य च संप्रवृद्धिः।
अपक्षपातोऽर्थिषु राज्यरक्षा पञ्चैव यज्ञाः कथितं नृपाणाम्॥१॥
किं? दैवकार्याणि नराधिपानां किंवा? विरोधो परिपन्थिभिश्च।
तदेव कार्यं जपयज्ञहोमा यदश्रुपाता न पतन्ति राष्ट्रे ॥१॥

एवं विक्रमे राज्यं कुर्वति सति एकदा चाराः भूम-

छले परिभ्रम्य राजसभामागता: राज्ञा पृष्टा: प्रोचु:।
भो देव! काश्मीरदेशे महाद्रव्यसम्पन्न: कश्चिद्वणिगास्ते
तेन वणिजा पञ्चक्रोशविस्तारं तड़ागमेकं खानितं तन्मध्ये
जलशयनस्य लक्ष्मीनारायणस्य शयनं कारितं परमुदकं
न लगति। पुनस्तेन वणिजा जलोद्गमनिमित्तं चक्रिणमु-
द्दिश्य ब्राह्मणैर्जपपूजाहवनमभिषेकादि कारितम्। त-
थाप्युदकं न लग्नम्। ततोऽतिखिन्न: सन् स वणिक् तड़ाग-
पाल्युपरि उपविश्य प्रतिदिनं निश्वसिति अहो केनाप्यु
पायेनोदकं न लगति वृथा श्रमो जात इति एकदा तड़ा-
गपाल्युपरि उपविष्टे सति गगने अमानुषी वागासीत्।
किमिति भो वणिक् पुत्र! किमर्थं निश्वसिषि द्वात्रिंश-
ल्लक्षणयुक्तस्य पुरुषस्य कण्ठरक्तेन यदा तड़ागं सिच्यते
तदा विमलोदकं भविष्यति नान्यथा। तच्छ्रुत्वा तेन वणिजा
तड़ागपाल्युपरि महदन्नच्छत्रं कारितम्। तस्मिन् छत्रे
भोक्तुं स्वदेशवासिनो जना: सर्वे समायान्ति तत्र स्थिता:
अधिकारिणस्तेषां विदेशवासिनां पुरत: एवं वदन्ति य:
कोऽपि स्वकण्ठरुधिरेण तड़ागं सेचयिष्यति तस्मै शतभारं
सुवर्णं दीयते इति तद्वच: सर्वे शृण्वन्ति न कोऽपि तत्
सहसा अङ्गीकुरुते इति महच्चित्रं दृष्टम्। तेषां वचनं
श्रुत्वा विक्रमार्को राजा स्वयं तत्रगतो जलाशयस्थस्य विष्णो-
र्महाप्रासादमति मनोहरं तथा विशालं तड़ागं दृष्ट्वा च वि-
स्मयङ्गतोमनसि विचारयति। इदं तड़ागं स्वकण्ठरक्तेन सेच-
यिष्यामि तर्हि इदं जलै: परिपूर्णं भविष्यति। तदा च स-
कललोकस्योपकारो भविष्यति। इदं मम शरीरं सर्वथा

वर्षशतं स्थित्वापि नाशमेव यास्यति अतो महता पुरुषेण शरीरे ममत्वं न कार्यम्। परोपकारार्थं शरीरमपि दातव्यं उक्तञ्च।

शतमपि च शरदां जीवितं धारयित्वा
शयनमपि शयानः सर्वथा नाशमेति।
सुलभविपदि देहे सर्वलोकैक निन्द्यं
न विदधति ममत्वं ये हि लोकोत्तरास्ते ॥ १ ॥

सर्वदैव रुजा क्रान्तं सर्वदैव शुचो गृहम्।
सर्वदा पतनप्रायं देहिनां देहपञ्जरम् ॥ २ ॥
तैरेव फलमेतस्य गृहीतं पुण्यकर्मभिः।
विरज्य जन्मनः स्वार्थे यैः शरीरं कदर्थितम् ॥ ३ ॥

एवं विचार्य पुरस्थितप्रासादगतजलशयनस्य विष्णोः पूजां विधाय नमस्कृत्य च भणति। भो जलदेवते त्वं द्वात्रिंशत् लक्षणयुक्तपुरुषस्य कण्ठरक्तं वाञ्छसि तर्हि ममानेन कण्ठरक्तेन तृप्ता सती इदं तड़ागं जलैः परिपूर्णं कुरु इत्युक्त्वा यावत् कण्ठे खड्गं करोति तावद्देवतया खड्गं धृत्वा भणितम्। भो वीर! तवाहं प्रसन्नास्मि वरं वृणीष्व। राजा अवदत्। यदि मम प्रसन्ना जातासि तर्हि इदं तड़ागं जलैः परिपूर्णं कुरु। पुनर्देव्या भणितम्। भो राजन्! त्वं अस्मात् स्थानात् त्वरितं निर्गच्छ यावत् पश्यसि तावज्जलैः परिपूर्णं भविष्यति। तच्छ्रुत्वा राजा सत्वरं तड़ागपालिङ्गतः तड़ागश्च जलैः परिपूर्णमभूत्। राजा विक्रमोऽपि स्वनगरमगमत्। एवं कथां कथयित्वा पुत्तलिका भोजराजमवादीत्। भो राजन्! त्वयि एवमौदार्यं परोपकार सत्व

सारादिप्रशस्तयो गुणाः विद्यन्ते चेत् तर्ह्यस्मिन् सिंहासने समुपविश ।

---

## अथ नवमोपाख्यानम् ।

पुनरन्या पुत्तलिकाब्रवीत् । विक्रमे राज्यं कुर्वति भट्टिर्मन्त्री बभूव । उपमन्त्री गोविन्दो बभूव । चन्द्रशेखरः सेनापतिः । त्रिविक्रमः पुरोहितः । तस्य त्रिविक्रमस्य पुत्रः कमलाकरः । स पितुः प्रसादात् घृतौदनं भुक्त्वा वस्त्रभूषणताम्बूलादिना शरीरसम्पुष्टो विषयसुखमनुभवन् तिष्ठति स्म । एकदा पित्रोक्तम् । रे पुत्र ! ब्राह्मणजन्म प्राप्य त्वया कथमिदं क्षीयते स्वेच्छानुरूपा । अयमात्मा जन्मशतं नानायोनिं प्राप्नोति ब्राह्मणकुले जन्म महता पुण्येन लभ्यते तत्रापि त्वं दुष्टाचारो जातः । सर्वदा बहिरेव वससि भोजनकाले गृहमायासि अनुचितमेतत् त्वया क्रियते तवायं विद्याभ्यासकालः । अस्मिन् काले विद्याभ्यासं न करोषि चेत् उत्तरत्र महान् सन्तापो भविष्यति ।

ये बालभावे न पठन्ति विद्यां कामातुरा यौवननष्टचित्ताः ।
ते वृद्धकाले परिभूयमानाः दह्यन्ति गात्रे शिशिरेऽपवस्त्राः ॥
येषां न विद्या न तपो न दानं न चापि शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूताः मनुष्यरूपेण मृगाश्चरन्ति ॥ १ ॥

अस्मिन् संसारे पुरुषस्य विद्यायाः परं भूषणं नास्ति ।

विद्यानाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।

विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥२॥
किं कुलेन विशालेन विद्याहीनस्य देहिनः।
अकुलीनोऽपि यो विद्वान् सर्वैरेव हि पूज्यते ॥ ३ ॥

रे पुत्र! यावदहं जीवामि तावत् त्वया विद्यैवाभ्यसनीयाः अभ्यस्ता विद्या तवसकलमपि बन्धुकृत्यं करिष्यति। उक्तञ्च।

मातेव रक्षति पितेव हिते नियुङ्क्ते
भार्येव चाभिरमयत्यपनीय खेदम्।
कीर्तिं च दिक्षु वितनोति करोति वित्तं
किं किं न साधयति कल्पलतेव विद्या ॥ ४ ॥

एवं तत् पितृवचनं श्रुत्वा पश्चात्तापयुक्तः कमलाकरो यदाहं सर्वज्ञो भविष्यामि तदास्य पितुर्मुखं द्रक्ष्यामि इत्युक्त्वा काश्मीरदेशं जगाम। तत्र चन्द्रमौलि भट्टोपाध्यायसमीपं गत्वा दण्डवत् प्रणम्योक्तवान्। भो स्वामिन्! अहं मूर्खः भवतां नामधेयं श्रुत्वा विद्याभ्यासार्थमागतः। मयि कृपां विधाय यथा विद्या भवति तथा विधेयं श्रीमद्भिरिति पुनर्दण्डवत् प्रणाममकरोत्। ततस्तैरङ्गीकृतम् अहर्निशं च तेषां शुश्रूषामकरोत्।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथ वा विद्यया विद्या चतुर्थैर्नोपपद्यते ॥

एवं शुश्रूषां कुर्वतो महान् कालो गतः। एकदा उपाध्यायः तस्योपरि कृपां विधाय सिद्धसारस्वतमन्त्रोपदेशं कृतवान्। तेनोपदेशेन सर्वज्ञो भूत्वा स कमलाकर उपा-

ध्यायस्यानुज्ञां गृहीत्वा स्वनगरमगमत्। मार्गवशात् काञ्ची-नगरमगच्छत्। तत्र राजा नरसेन: तस्य नगर्यां नरमोहिनी-नाम्नी काचित् वनिता अस्ति सा रूपेण अद्वितीया। तां य: कोऽपि पश्यति स कामज्वरपीड़ित: उन्मादावस्थां प्राप्नोति। य: पुन: सम्भोगार्थं तया सह निद्रां करोति तस्य रक्तं विन्ध्याचलवासी कश्चिद्राक्षस: पिबति तदा स निर्जीवो भवति कमलाकरोऽप्येतत् कौतुकं दृष्ट्वा निजनगरमगमत्। तमागतं दृष्ट्वा माता पित्रादीनां महान् उत्सवो जात:। द्वितीयदिवसे स्वपित्रा सह राज भवनं गत्वा राज्ञे आशीर्वादं अदात्। सभायां निज वैदग्ध्यञ्च अदर्शयत्। ततो विक्रमार्केण वस्त्रादिना सम्भाव्य पृष्ट:। भो कमला-कर! त्वं यत्र देशे गतस्तत्र किं चित्रं दृष्टम्?। तेनोक्तम्। भो राजन्! तत्र देशे किमपि न दृष्टम्। परमागमनसमये काञ्चीनगरे अपूर्वमेकं कौतुकं दृष्टम्। राज्ञोक्तम्। किं दृष्टं तत्कथय। कमलाकरेणोक्तम्। काञ्चीनगरे नर-मोहिनी नाम्नी काचिद्वनिता अस्ति। यस्तां पश्यति उन्मादं प्राप्नोति। यस्तया सह निद्रां करोति तस्य रक्तं विन्ध्या-चलवासी कश्चिद्राक्षस: समागत्य नरमोहिन्या रूपं दृष्ट्वा विस्मयं प्राप्त: पिबति तत: स निर्जीवो भवति। एतत् कौतुकं मया दृष्टम्। ततो राज्ञा भणितम्। त्वं तर्हि आगच्छ तत्र गच्छाव:। इति तेन सह राजा काञ्चीनगर-मागत्य नरमोहिनी रूपं दृष्ट्वा विस्मयं प्राप्तस्तस्या गृहं गत:। तया पादप्रक्षालनाभ्यङ्ग सुगन्धपुष्पादिना सम्भा-वित:। उक्तञ्च। भो राजन्! अद्याहं धन्या जातास्मि।

मम गृहं श्लाघ्यमभूत् भवच्चरण प्रसादेन।

अद्य मे सुचिरात् कालात् श्लाघनीयमभूदिदम्।
युष्मत्पादाम्बुजस्पर्शसम्पन्नानुग्रहं गृहम्॥

स्वामिन्! मम गृहे भोजनं कार्य्यम्। राज्ञोक्तम्। इदानीमेव भोजनं कृत्वा समागतोऽस्मि। ततस्तया वीटिका दत्ता एवं रात्रौ प्रहरो गतः। सा नरमोहिनी निद्राङ्गता द्वितीयप्रहरे राक्षसः समागतः। राजा राक्षससञ्चारं श्रुत्वा स्वयम् पश्चात् स्थितः।

भूरि प्रज्वलिता दीपास्तावद्राक्षस आगतः।
एकैव दृष्टा तेनैव केवला नरमोहिनी॥ १॥

तत्र किञ्चित् न दृष्ट्वा राक्षसो निर्गतस्ततः नरमोहिन्या मञ्चं यावत् पश्यति तावत् सा एका सुप्ता अस्ति। द्वितीयः कश्चिन्न अस्ति। निर्गमन समये राज्ञा धृतोमारितश्च राक्षसः तत्कोलाहलं श्रुत्वा सा नरमोहिनी निद्रां विहाय हतं राक्षसं दृष्ट्वा राजानं भणति। भो राजन्! त्वत्प्रसादादहंनिर्भया जाता अद्य प्रभृति राक्षसस्योपद्रवो गतः। तत् कृतोपकारात् कथ महमुत्तीर्णा भवामि। तर्हि त्वां अनुसरामि त्वया यदुच्यते तदहं करिष्यामि। राज्ञोक्तम्। यदि-मयोक्तं करिष्यसि तर्हि कमलाकरममुं भजस्व। सा नरमोहिनी कमलाकरमभजत। विक्रमोऽप्युज्जयिनीमागतः। इमां कथां कथयित्वा पुत्तलिका भोजराजमवादीत्। भो राजन्! त्वयि एवं धैर्यं विद्यते चेत् तर्ह्यस्मिन् सिंहासने समुपविश।

---

# अथ दशमोपाख्यानम्।

पुनरन्या पुत्तलिका कथयति। श्रूयताम्। राजन्! वि- क्रमार्के राज्यं कुर्वति कश्चिद्योगी उज्जयिनीं प्रति आगतः। स च वेदशास्त्रवैद्यज्योतिषगणित भरतशास्त्रादिसकल- कलाविचक्षणः किं बहुना तत्सदृशोऽन्यो नास्ति साक्षात् सर्वज्ञ एव। एकदा विक्रमोराजा तस्य प्रसिद्धिं श्रुत्वा तमाह्वातुं पुरोहितं प्रेषितवान्। पुरोहितोऽपि तदन्तिकं गत्वा नमस्कृत्वाब्रवीत्। भो स्वामिन्! राजा भवन्तमा- ह्वयति तत्रागन्तव्यम्। योगिनोक्तम्। तर्हि गम्यतां तत्र गत्वा राजानं प्रति भणितम्। भो राजन्! त्वं चेत् मन्त्र- साधनं करिष्यसि। तर्हि तेन जरामरणरहितो भविष्यसि। राज्ञोक्तम्। त्वं मन्त्रं ममोपदिश। अहं मन्त्रं साध- यिष्यामि। ततो योगी तस्मै मन्त्रमुपदिश्य भणितम्। भो राजन्! अमुं मन्त्रं ब्रह्मचर्येण वर्षमेकं पठित्वा दूर्वा- ङ्कुरैर्दशांशहवनं अग्नौ कृत्वा ततः पूर्णाहुतिसमये मकुण्डात् कश्चित् पुरुषः फलहस्तो निर्गत्य तत्फ दास्यति। तत्फलभक्षणेन त्वं जरामरणरहितो य भविष्यसीति राज्ञे मन्त्रमुपदिश्य स योगी निजस्थानं गतः। राजापि ग्रामाद्बहिर्वर्षमेकं ब्रह्मचर्य्येण मन्त्रं पठित्वा दूर्वादलैर्दशांश होममग्नौ कृत्वा यावत् पूर्णाहुतिं करोति तावद्धोमकुण्डात् कश्चित् पुरुषो विनिर्गत्य दिव्यमेकं फलं राज्ञे ददौ। राजापि तत्फलं गृहीत्वा पुरं प्रविश्य यदा राजमार्गे समायाति तदा कुष्ठव्याधिना विशीर्णावयवः

कश्चिद्ब्राह्मणो राज्ञे आशिषं प्रयुज्यावदत्। भो राजन्! राजा नाम लोकस्य मातृपित्रादिस्थाने नियोजितः। उक्तञ्च।

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम्।
राजा माता पिता चैव सर्वस्यार्तिहरो गुरुः॥

यतः त्वं विश्वस्यार्तिं परिहरसि अतः ममापि आर्त्तिं नाशय अनेन व्याधिना ममशरीरं विनश्यति शरीरनाशाद-नुष्ठानमपि नष्टं यतः सर्वस्यापि धर्मकार्यस्य शरीरमेव साधनम्। उक्तञ्च।

शरीरमाद्यं खलु धर्मसाधनमिति। तर्हि ममैतच्छरीरं निरामयं उपभोग्यं च यथा भवति तथा कर्तव्यम्। तद्-ब्राह्मणवचनं श्रुत्वा स राजा तस्मै तत्फलं ददौ। ततो ब्राह्मणः परं सन्तोषं प्राप्य निजस्थानं गतः। राजापि स्वभवनमगमत्। इति कथयित्वा पुत्तलिका भोजराजम-[illegible]दीत्। भो राजन्! एवमौदार्यं धैर्यं च विद्यते [illegible]मन् सिंहासने समुपविश। तच्छ्रुत्वा राजा तूष्णी-[illegible]।

---

## अथ एकादशोपाख्यानम्।

पुनरन्या कथयति। भो राजन्! श्रूयताम्। विक्रमे राज्यं कुर्वति भूमण्डले पिशुनस्तस्करश्च पापकर्मं निरतो नासीत्। अन्यच्च। यस्य राज्ञः सदा राज्यभारचिन्ता बलव-द्वैरिविजयचिन्ता अस्ति स दिवारात्रिं निद्रां नायाति। उक्तञ्च।

अर्थातुराणां न पिता न बन्धुः कामातुराणां न भयं न लज्जा।
चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न तेजः॥

अयं विक्रमादित्यो राजा तथाविधो न भवति। सर्वान् अर्थिभूभुजः स्वपादपद्माश्रितान् विधाय आज्ञाप्रदानेन राज्यं करोति। उक्तञ्च।

आज्ञामात्र फलं राज्यं ब्रह्मचर्यफलं तपः।
ज्ञानमात्र फला विद्या दत्तभुक्तफलं धनम्॥ २॥

एकदा राज्यभारं मन्त्रिषु निधाय स्वयं योगिवेशेण देशान्तरं निर्गतः। यत्रात्मनश्चित्तस्य सुखं भवति तत्र कतिचिद्दिनानि तिष्ठति यत्राश्चर्यं पश्यति तत्रापि कालं नयति। एवं पर्य्यटतस्तस्य एकस्मिन् दिवसे सूर्योऽप्यस्तङ्गतः। महारण्यमध्ये राजा वृक्षमूलमाश्रित्य रात्रौ स्थितः। तस्य वृक्षस्योपरि वृद्धचिरञ्जीवि नामा कश्चित्पक्षिराजोऽभूत्। तस्य पुत्राः पौत्राश्च देशान्तरालङ्गत्वा स्वोदरपूरणं विधाय सायङ्काले प्रत्येकमेकैकं फलमादाय वृद्धाय तस्मै चिरञ्जीविने प्रतिदिनं प्रयच्छन्ति।

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥ १॥

ततो रात्रौ चिरञ्जीवी सुखेनोपविष्टस्तान् पक्षिणः अपृच्छत्। राजापि वृक्षमूले स्थितस्तद्वचः शृणोति। भो पुत्राः! भवद्भिर्नाना देशान् पर्य्यटद्भिः किञ्चित्रं दृष्टम्। तत्रैकेन पक्षिणा भणितम्। मया किमप्याश्चर्यं न दृष्टम्। परं अद्य मम चेतसि महादुःखं भवति। चिरञ्जीविनोक्तम्। तत्कथय किं निमित्तं दुःखं तेनोक्तम्। केवलं कथ-

नेन किं भवति। हरेणोक्तम्। भो पुत्र! यो दुःखी स सुहृदि दुःखं निवेद्य सुखी भवति। तस्य वाक्यं श्रुत्वा दुःखकारणं कथयति। भो तात! श्रूयताम्। अस्ति उत्तरदेशे शैवालघोषो नाम पर्वतस्तत्पर्वतसमीपे पलाश-नगरमस्ति तस्मिन् पर्वते स्थितः कश्चिद्राक्षसः प्रतिदिनं नग-रमागत्य सम्मुखागतं कञ्चन पुरुषं पर्वते नीत्वा भक्ष-यति। एकदा स ग्रामवासिभिः जनैः उक्तः। भो बका-सुर! त्वं यथेच्छं सम्मुख पतितं मा भक्षय वयं तुभ्यं प्रति-दिनमाहारार्थं एकं पुरुषं दास्यामः। तद्वचस्तेनाङ्गी कृतम् तदनन्तरं तत्रत्यो जनः प्रतिदिनं गृहक्रमेणैकैकं पुरुषं तस्मै प्रयच्छति। एवं महान् कालो गतः। अद्य पूर्वजन्म-निमित्त भूतस्य मम मित्रस्य ब्राह्मणस्य पाली समायाता। तस्यैक एव पुत्रः पुत्रं ददाति चेत् सन्ततिच्छेदो भविष्यति। आत्मानं प्रयच्छति चेत् भार्या विधवा भविष्यति। वैधव्यं पुनर्महादुःखम्। पत्नीं दास्यति चेत् आश्रमभ्रंशो भवति इति तेषां दुःखेनाहं महद्दुःखी इति मम महद्दुःखकार-णम् तस्य वचनं श्रुत्वा तत्रत्यैः पक्षिभिर्भणितम्। अहो अयमेव सुहृत् यः सुहृदो दुःखेन स्वयं दुःखी भवति। एतदेव मित्रत्वम्।

सुखितः सुखी सुहृज्जनो दुःखिनि दुःखी स्वयं च योभवति।
उदितेमुदितः सिन्धुः शशिन्यस्तमयति क्षीणः॥

क्षीरेणात्मगतोदकाय हि गुणाभष्टाः पुरातेऽखिलाः
पश्चात्क्षिरवेक्ष्यते तु पयसात्मात्मा कृशानौ हुतः।
गन्तुं पावकमुन्मनस्तद भवत् दृष्ट्वापि मित्रापदं

युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्ता दृशी ॥१॥

इति पक्षिणोवच: श्रुत्वा राजा तत्र नगरे गत:। ततो वध्यशिलां निरीक्ष्य ब्राह्मणाय अभयं दत्वा तत्समीपे सरोवरे स्नात्वा वध्याशिलायामुपविष्ट:। तस्मिन् समये राक्षस: समागत्य प्रहसितवदनं पुरुषं दृष्ट्वा विस्मितस्तं वदति। भो महासत्व! त्वं सर्वस्यार्तिहरो गुरु:। यत: त्वं विश्वस्यार्तिं परिहरसि अत: अनेन पापिन: कार्य्येण मम शरीरं विनश्यति शरीरनाशादनुष्ठानमपि नष्टम्। यत: सर्वस्यापि धर्मकार्य्यस्य शरीरमेव साधनम् अतश्शिलायां प्रतिदिनं य: उपविशति स मदागमनात् पूर्वमेव म्रियते। त्वं पुन: महाधैर्यसम्पन्न: प्रहसितवदनो दृश्यसे। यस्य मरणकाल: समायाति। तस्येन्द्रियाणि ग्लानिं प्राप्नुवन्ति। त्वं पुनरधिकं कान्तिं प्राप्य हससि तर्हि कथय को भवानिति। राजा भणति। किमनेन विचारेण। मया परार्थमेतच्छरीरं दीयते त्वमात्मन: समीहितं कुरु तदा राक्षसेन स्वमनसि विचारितं अहो साधुरयं य: आत्मन: सुखभोगेच्छां विहाय परदु:खेन: दु:खी भूत्वा अत्र एति। उक्तञ्च।

त्यक्तात्म सुखदु:खेच्छां सर्वसत्व गुणैषिण:।
भवन्ति परदु:खेन साधवोऽत्यन्त दु:खिन: ॥ १ ॥

स राजानमब्रवीत्। भो महापुरुष! परार्थं शरीरं प्रयच्छतस्तवैव एतच्छरीरं श्लाघ्यम्।

कृत: पशवोऽपि जीवन्ति केवला: स्वोदरम्भरा:।
तस्यैव जीवितं श्लाघ्यं य: परार्थे हि जीवति ॥ १ ॥

भवादृशां परोपकारिणामेतच्चित्रं न भवति।
किमत्र चित्रं यत् सन्तः परानुग्रहतत्पराः।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः॥२॥

भो महासत्व! अनेनैव परोपकारेण त्वं सर्वाः सम्पदः प्राप्नोषि।

परोपकारव्यापारो पुरुषो यः प्रजायते
सम्पदं स समाप्नोति परत्रापि परम्पदम्।
परोपकार निरताः ये स्वार्थसुखनिस्पृहाः
जगद्धिताय जनिताः साधवस्त्वीदृशा भुवि॥

एवं भणित्वा राजानमब्रवीत्। भो महासत्व! तवाहन्तुष्टोऽस्मि। वरं वृणीष्व। राज्ञोक्तम्। भो राक्षस! त्वं यदि मम प्रसन्नोऽसि तदद्य प्रभृति मनुष्यभक्षणं परित्यज। अन्यमपि मयोच्यमानमुपदेशं शृणु।

तवात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा।
तस्मान्मृत्युभयात् तेऽपि त्रातव्याः प्राणिनो बुधैः॥

अन्यच्च।

जन्ममृत्युजरादुःखैर्नित्यं संसारसागरे।
क्लिश्यन्ति जन्तवो घोरे मर्त्यास्त्रस्यन्ति मृत्युतः॥
मरिष्यामीति यद्दुःखं पुरुषस्योपजायते।
शक्यते नानुमानेन तद्वक्तुं केनचित् क्वचित्॥

तथा च।

तज्जीवितमात्मनः प्रियं तथा परेषामपि जीवितं प्रियम्।
निरीक्षते जीवितमात्मनो यथा तथा परेषामपि रक्ष जीवितम्॥

राज्ञा इति निरूपितः राक्षसः तदा प्रभृति जीवमा-

रथं तत्याज राजा स्वनगरीं प्रत्यगात्। इमां कथां कथयित्वा पुत्तलिका भोजराजं प्रति अब्रवीत्। त्वयि एवं परोपकार-दया-गुणादयो विद्यन्ते चेत् तर्हि अस्मिन् सिंहासने समुपविश्य राजा तूष्णीमासीत्।

---

# अथ द्वादशोपाख्यानम्।

पुनरन्या पुत्तलिकावदत्। भो राजन्! श्रूयतां विक्रमादित्ये राज्यं कुर्वति सति तस्य नगरे भद्रसेनो नाम वणिगासीत्। तस्य भद्रसेनस्य सम्पदां मर्यादा नासीत्। परं व्ययशीलोऽपि नासीत्। ततः काले गच्छति भद्रसेनो मृतः। तस्य पुत्रः पुरन्दरोऽपि पितुः सर्वस्वं प्राप्य तस्य त्यागं कर्त्तुमुपक्रान्तवान्। ततः एकदा तस्य प्रियमित्रेण धनदेन भणितम्। भो पुरन्दर! त्वं वणिक् पुत्रो भूत्वापि महाक्षत्रियकुमार इव धनव्ययं करोषि। एतद्वणिककुलसम्भवस्य लक्षणं न भवति। वणिक् पुत्रेण येन केनापि उपायेन संग्रहः कर्तव्यः वराटिकाया अपि व्ययो न कर्तव्यः। उपार्जितं द्रव्यं एकदा कस्याञ्चिदापदि पुरुषस्योपयोगं व्रजति। अतो बुद्धिमता आपदर्थे धनसंग्रहः कर्तव्यः। उक्तञ्च।

आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि॥ १॥

एतद्वचनं श्रुत्वा पुरन्दरः प्राह। भो धनदेव! उपा-

र्जितं वित्तं एकदा कस्माच्चिदापदि उपयोगाय भवति इति यो वदति स: विचारशून्य:। यदा आपद: आयास्यन्ति तदा उपार्जितमपि धन नश्यति। अतो बुद्धिमता पुरुषेण गतस्य शोक: आगामिनोऽर्थस्य चिन्ता च न कार्या। परं वर्त्तमानमेव विचारणीयम्। उक्तञ्च।

गत शोकोन कर्तव्यो भाविनं नैव चिन्तयेत्।

वर्त्तमानेषु कार्य्येषु चिन्तयन्ति विचक्षणा:॥

यद्भवितव्यं तदनायासेनापि भविष्यति। यद्गन्तव्यं तत् तद्गमिष्यत्येव।

भवितव्यं भवत्येव नारिकेल फलाम्बुवत्।

गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत्॥ १॥

न हि भवति यन्नभाव्यं भवति च भाव्यं विनापि यत्नेन।

करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति॥२॥

एवं पुरन्दरवचनेन धनदो निरुत्तरोऽभूत्। तत: पुरन्दर: पितृद्रव्यस्य सर्वं व्ययमकरोत्। ततो निर्धनिकं पुरन्दरं बन्धुमित्रादयो न मानयन्ति स्म। तेन सह गोष्ठीरपि न कुर्वन्ति। पुरन्दरेण स्वमनसि चिन्तितम्। मम हस्ते यावत् धनमभूत् तावदेते मित्रादयो मम सेवका आसन्। इदानीं मया सह वाक्यमपि न कुर्वन्ति अथवा। यस्यार्थोऽस्ति तस्यैव मित्रादय: सन्ति। उक्तञ्च।

यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवा:।

यस्यार्थ: स पुमान् लोके यस्यार्थ: स च पण्डित:॥१॥

पुंसि क्षीणधने न बान्धवजन: पूर्वं यथा वर्त्तते

स्त्रिया केवलयाश्रित: परिजन: स्वच्छन्दतां गच्छति।

शीलत्वं सुहृदः प्रयान्ति बहुमः किं बान्धवैर्भाषितैः
भार्याया अपि निश्चितं गतधने वादो मुहुःखोद्भवम् ॥
यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥
वनानि दहतोवह्नेः सखा भवति मारुतः।
स एव दीपनाशाय क्षीणे कस्यास्ति सौहृदम् ? ॥
अतो दारिद्र्यात् मरण एव वरम्।
उत्तिष्ठ क्षणमात्रमुद्वह सखे ! दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम्।
इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने वसन्
दारिद्र्यान्मरणं वरं परमिति ज्ञात्वेव तूष्णीं स्थितः॥१
दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः।
विश्वस्थो हि जनः कश्चित् न मां पश्यति सर्वदा ॥
मृतो दरिद्र पुरुषो मृतं मैथुनमप्रजम्।
मृतमश्रोत्रियं दानं मृतो यागस्त्वदक्षिणः ॥

इत्येवं विचार्य देशान्तरं गतः। परिभ्रमन् हिमाचल समीपस्थितं नगरमेकमगमत्। तस्य नगरस्य नाति दूरे वेणूनां वनमभूत्। स्वयं ग्रामाभ्यन्तरं गत्वा रात्रौ कस्यचिद् गृहवेदिकायां सुष्वाप। अर्धरात्रसमये वेणुवनमध्ये रुदन्त्याः कस्याश्चित् स्त्रिया हाहाकारोऽभूत्। भो महाजन ! मां परित्रायध्वं परित्रायध्वमिति कोऽपि राक्षसो मां मारयति इति रोदनमश्रौषीत्। ततः प्रभात समये ग्रामस्थान् जनान् अपृच्छत्। भो महाजनाः ! किमेतदत्र वेणुवन-मध्ये काचित् स्त्री रात्रौ रुदति। तैरुक्तम्। अत्र वेणुवनमध्ये

प्रतिदिनमेवं रात्रौ रोदनध्वनिः श्रूयते। परं न कोऽपि भयाद्गच्छति न विचारयति च। ततः पुरन्दरः स्वनगरमागत्य राजानमद्राक्षीत्। ततो राज्ञा पृष्टः। भो पुरन्दर! देशान्तरं गच्छता त्वया किमपि अपूर्वं दृष्टं? ततः पुरन्दरो वेणुवन वृत्तान्तं राज्ञे समकथयत्। तत् कौतुकं श्रुत्वा राजा तेन सह तं नगरं गत्वा रात्रौ वेणुवनमध्ये स्त्रिया रोदनशब्दं श्रुत्वा यावद्वनमध्ये प्रविशति तावदतिभयङ्कररूपं रुदतीं अनाथां स्त्रियं मारयन्तं राक्षसमेकमपश्यत् अब्रवीच्च रे पापिष्ठ! स्त्रियमनाथां किमर्थं मारयसि। राक्षसेनोक्तम्। तव किमनेन विचारेण। त्वमात्ममार्गेण गच्छ अन्यथा वृथैव मम हस्तात् मरिष्यसि। तत उभयोर्युद्धं जातम्। राज्ञा स राक्षसोमारितः तदा सा स्त्री समागत्य राज्ञः पादयोः पतित्वा भणतिस्म। भो स्वामिन्! तव प्रसादान्मम शापावसानमभूत् महतो दुःखसागरात् त्वयाहम् उद्धृता। राज्ञा भणितम्। कासि त्वम्? तयोक्तम्। अस्मिन्नेव नगरे महाधनसम्पन्नः कश्चित् ब्राह्मणोऽभूत्। तस्य भार्याहं व्यभिचारिणी भूत्वा तस्योपरि प्रीतिर्नासीत्। तस्य ममोपरि महाननुरागश्चासीत्। रूपादिगर्वयुताहं तेन सम्भोगार्थमाहूतापि नागमम्। ततो यावज्जीवं कामसन्तप्तः स मम पतिर्देहावसानसमये मामशपत्। किमिति रे दुराचारे! यथा यावज्जीवं त्वया मम सन्तापः उत्पादितः तथैव वेणुवनवासी कश्चिदति भयङ्कररूपो राक्षसो रात्रौ त्वामनिच्छन्तीं सुरतार्थं प्रतिदिनं मारयतु इति तेन शप्ता अहम्। पुनः शापावसानं मया याचितं कि-

मिति भो नाथ! शापस्यावसानं देहि। तेनोक्तम्। यदा परोपकारी महाधैर्यसम्पन्नः पुरुषः कश्चित् समायाति तत्पादौ नत्वा सः तं राक्षसं हनिष्यति तदा त्वं शापमुक्ता भविष्यसि। मदीयमिदं धनं तस्मै देहीति मामुक्त्वा प्राणान् अत्यजत्। अतः परमहं त्वदधीनास्मि। इमं धनघटं च गृहाणेति श्रुत्वा राजापि तं धनघटं तां च पुरन्दरवणिजे दत्त्वा तेन सहोज्जयिनीमगात्। पुत्तलिका इमां कथां कथयित्वा भोजमब्रवीत्। भो राजन्! त्वय्येवं धैर्यमौदार्यं विद्यते चेत् तस्मिन् सिंहासने समुपविश।

---

## अथ त्रयस्त्रिंशोपाख्यानम्।

पुनरन्या पुत्तलिका वदति। शृणु राजन्! एकदा विक्रमो राजा राज्यभारं मन्त्रिवर्गे निधाय स्वयं योगिवेशेन पृथ्वीपर्य्यटनं कर्त्तुमुद्यतः। ग्रामे एकां रात्रिं नयति नगरे पञ्चरात्रीर्गमयति एवं परिभ्रमन्नेकदा नगरमेकमगमत्। तन्नगरसमीपस्थिते नदीतटे देवालयमेकमासीत्। तस्मिन् देवालये सर्वे महाजनाः पौराणिकात् पुराणं शृण्वन्ति। राजापि नद्यां स्नात्वा देवालयं गत्वा देवं नमस्कृत्य महाजनसमीपे उपविष्टः। तस्मिन् समये पौराणिकाः पुराणवाक्यानि पठन्ति।

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः॥ १॥

श्रूयतां धर्म्मसर्वस्वं यदुक्तं ग्रन्थकोटिभिः।
परोपकारः पुण्याय पापाय परपीड़नम्॥ २॥
यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः।
सुखितानि सुखीवापि स धर्मं वेद नैष्ठिकम्॥ ३॥
जाने भूयां स्ततो धर्म्मः कश्चिन्नान्योऽस्ति देहिनः।
प्राणिनां भयभीताना मभयं यः प्रयच्छति॥ ४॥
वरमेकस्य तस्तस्य प्रदातुर्जीवितं फलम्।
न च विप्र सहस्रेभ्यो गोसहस्रं फलं लभेत्॥ ५॥
अभयं सर्वभूतेभ्यो यो ददाति दयापरः।
तस्य पुण्यस्य कल्पान्ते चयमेव न विद्यते॥ ६॥
हेमधेनुधरादीनां दातारः सुलभा भुवि।
दुर्लभः पुरुषो लोके सर्वजीवे दयापरः॥ ७॥
महतामपि यज्ञानां कालेन चीयते फलम्।
अथाभय प्रदानस्य कलां नार्हति षोड़शीम्॥ ८॥
चतुः सागरपर्यन्तां यो दद्याद्वसुधामिमाम्।
यश्चाभयं च भूतेभ्यस्तयोरभयदोऽधिकः॥ ९॥
अध्रुवेण शरीरेण प्रतिचण-विनाशिना।
ध्रुवं यो नार्जयेत् धर्म्मं स शोच्यो मूढ़चेतनः॥ १०॥
यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते।
ततः किमुपकारेण प्रत्यहं क्रियते नृभिः॥ ११॥
एकतः क्रतवः सर्वे समग्रवरदक्षिणाः।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम्॥ १२॥

एवं पुराण कथन समये कश्चिद्वृद्धो ब्राह्मणः पत्नगा सह नदीमुत्तरन् महापूरेण नीयमानो हाहाकारं कुर्वन्

नदीमध्ये महाजनान् प्रति वदति भो भो महाजनाः! धावध्वं धावध्वं वृद्धः सपत्नीको ब्राह्मणोऽहं नदी प्रवाहेण बलात् नीयमानः। कोऽपि सत्वाधिको धार्मिकः मम सपत्नीकस्य जीवदानं ददातु। जलेनोह्यमानस्य दीनध्वनिं श्रुत्वा महाजनाः सर्वेऽपि सकौतुकं पश्यन्ति। परं न कोऽपि नदीमध्ये प्रविश्य प्रवाहादपनेतुं तस्याभयं प्रयच्छति ततो विक्रमो राजा माभैषीरिति तस्याभयं दत्वा नदीमध्ये प्रविश्य पत्न्या सह तं ब्राह्मणं महापूरादाकृष्य तटमानीतवान्। ब्राह्मणोऽपि स्वस्थः सन् राजानमवदत्। भो महासत्व! ममैतच्छरीरं पूर्वं माता पितृभ्यामुत्पादितम्। इदानीं त्वत्सकाशात् द्वितीयं जन्म प्राप्तम्। अतः प्राणदानात् महोपकारिणस्तव किमपि प्रत्युपकारं न करिष्यामि चेत्तर्हि मम जीवितं व्यर्थं स्यात्। तस्मात् गोदावर्युदकमध्ये द्वादशवर्षपर्य्यन्तं मन्त्रजपस्य पुण्यं तुभ्यं दीयते। अन्यच्च। यत्कृच्छ्रचान्द्रायणादिना किमपि सुकृतमुपार्जितमस्ति तत् सर्वं गृहाणेत्युक्त्वा तत्पुण्यं राज्ञे समर्प्याशिषं दत्वा पत्न्या सह निजस्थानं गतः। तस्मिन् समये अतिभयङ्कररूपः कश्चित् ब्रह्मराक्षसो राजसमीपमागतः। राजापि तं दृष्ट्वा अवदत्। भो महासत्व! कोऽसि त्वम्। तेनोक्तम्। अहमत्रैव नगरे ब्राह्मणः कश्चित् सर्वदा दुष्प्रतिग्रहजीवी अयाज्ययाजकश्च तथाविधोऽपि गुरून् वृद्धान् साधून् महतश्च दूषयामि। तस्मात् पातकवशात् अस्मिन् अश्वत्थपादपे ब्रह्मराक्षसो भूत्वा अत्यन्त दुःखितो दशवर्षसहस्रं तिष्ठामि।

अद्य भवतः प्रसादादुत्तीर्णो भविष्यामि। इति तद्वाक्यं श्रुत्वा राज्ञा तदैव तत्पुण्यं तस्मै दत्तम्। सोऽपि तेन पुण्येन तस्मात् कर्मयोमुक्तो दिव्यरूपधरः सन् राजानं स्तुत्वा स्वर्गं जगाम। राजापि स्वनगरमगमत्। इति कथां कथयित्वा पुत्तलिका भोजमवदत्। त्वय्येवं परोपकारं धैर्यमौदार्यं चेत् विद्यते तदास्मिन् सिंहासने समुपविश। राजाप्यधोमुखो बभूव।

---

## अथ चतुर्दशोपाख्यानम्।

पुनरन्या पुत्तलिकाब्रवीत्। एकदा विक्रमादित्यो राजा पृथ्वीतले कस्मिन् स्थाने किमाश्चर्यं कीन सन्तः किं तीर्थं का वा देवतास्तीति विलोकयन् स्वयं योगिवेशेन परिभ्रमन्नगरमेकमगमत्। तत्समीपे तपोवनमेकं अस्ति। तस्मिं स्तपोवने जगदम्बिकायाः महान् प्रासादोऽभूत्। तत्समीपे नदी वहति राजापि नद्यां स्नात्वा देवतां नमस्कृत्य तत्र देवालये उपविष्टो यावत् पश्यति तावत् अवधूतसारो नाम कश्चिद्योगी तत्र समागतः। सुखी चेत्युक्तः तेन सह तत्र देवालये उपविष्टः। योगिनोक्तम्। कुतः समागतो भवान्?। राज्ञोक्तम्। मार्गस्थोऽहं कोऽपि तीर्थयात्रिकः। योगिनोक्तम्। त्वं विक्रमादित्यो राजा ननु मया एकदा उज्जयिन्यां दृष्टोऽसि अतोऽहं जानामि। किमर्थं आगतोऽसि? राजाब्रवीत्। भो योगिराजन्! मम म-

नसि एवं इच्छा वर्त्तते पृथ्वीपर्य्यटनेन किमप्याश्चर्यं विलोकनीयमिति तथा सतां संदर्शनमपि भविष्यति। अथ भूतसारोऽब्रवीत्। भो राजन्! त्वं तादृशः विचक्षणोऽपि प्रमत्तः सन् देशान्तरे आगतोऽसि। राज्यमध्ये विप्लवश्चेद्भविष्यति तदा किं करिष्यसि। राज्ञोक्तम्। अहं सर्वमपि राज्यभारं मन्त्रिहस्ते निधाय समागतोऽस्मि। योगिनोक्तम्। राजन्! तथापि त्वया नीतिशास्त्रविरोधः कृतः। उक्तञ्च।

नियोगि हस्तार्पित राज्यभारास्तिष्ठन्ति ये शैलविहारसाराः।
विड़ालवृन्दाहितदुग्धकुम्भाः स्वपन्ति ते मूढ़धियः क्षितीन्द्राः॥१॥

अन्यच्च राज्यञ्च स्ववशमागतमिति नोपेक्षणीयं पुनः सुदृढ़ं कर्त्तव्यम्।

कृषिर्विद्या वणिग्भार्या स्वधनं राज्यसम्पदः।
सुदृढ़ं चैव कर्त्तव्यं कृष्णसर्पमुखं यथा॥ २॥

तच्छ्रुत्वा राजा भणति। योगिन् सर्वमेतदनर्थकं अत्र दैवबलमेव बलवत्। सुदृढीकृते सर्वसामग्रीसहितेऽपि राज्ये पौरुषयुक्तोऽपि पुरुषो दैववैमुख्यात् पराभवं प्राप्नोति। तदुक्तम्।

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावती वाहनः।
इत्याश्चर्यं बलान्वितोऽपि वलिभिर्भग्नः परैः सङ्गरे
तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम्॥१॥

तथा च।

नैवाकृतिः फलति नैव कुलं न शीलं

विद्यापि नैव न च यत्र कृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ २ ॥

येनाखण्डलदन्ति दन्तकुमुदान्या कुण्ठितान्याहवे
धारा यत्र पिनाकपाणिपरशोरा कुण्ठिताश्चाहताः ।
तद्वक्षोऽथ नृसिंहपाणि नखरैर्दीर्णं हि यत् साम्प्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥

वटवृक्षस्थिता यक्षा ददतीह हरन्ति च ।
अस्मान् पातय कल्याणि! यद्भाव्यं तद्भविष्यति ॥

योगिनोक्तम् । कथञ्चैतद् ? राजाब्रवीत् । अस्ति उत्तरदेशे महीपर्वतवर्द्धनं नाम नगरम् । तत्र राजशेखरो नाम राजा राज्यभारं करोति स्म । स देव द्विजपरायणोऽतीव धार्मिकः । एकदा तस्य दायादाः सर्वे समागत्य तेन सह विगृह्य राज्यं गृहीत्वा सपत्नीकं तं नगरात् निरासिषुः । ततः स राजा पत्न्या पुत्रेण च सह देशान्तरं पर्य्यटन् कस्यचिन्नगरस्योपवने गतः । तत्र सूर्य्योऽप्यस्तं गतः । स पत्न्या पुत्रेण च समन्वितो वटवृक्षमूले गत्वोपविष्टः । तस्मिन् वृक्षे पञ्च पक्षिणः आसन् ते परस्परं वदन्ति स्म । तत्र एकेनोक्तम् अस्मिन्नगरे राजा मृतः । तस्य सन्ततिर्नास्ति । को वा राजा भविष्यति द्वितीयेनोक्तम् । अत्र वटवृक्षमूले यो राजा तिष्ठति तस्य राज्यं भविष्यति । अन्यैरुक्तम् । तथास्तु । राजापि पक्षिणां तद्वाक्यमशृणोत् । ततः सूर्य्योदयो जातः सर्वोऽपि जनः स्वस्व कर्माणि कर्तुं प्रवृत्तः राजापि सन्ध्याह्निकं कर्म कृत्वा सूर्य्यार्घ्यं दत्त्वा सूर्य्यं

नमस्कृत्य स यावद्राजमार्गाभिमुखं निर्गतः तावद्रा-
ज्योत्पत्ति निमित्तं मन्त्रिभिर्मुक्ता छतमाला करिणी
राजानं विलोक्य तस्य कण्ठे मालां निधाय स्कन्धमारोप्य रा-
जभवनं निनाय। ततः सर्वैर्मन्त्रिभिर्मिलित्वा अभिषेकं विधाय
राजशेखरो राजा राज्ये स्थापितः। एकदा सर्वे प्रतिस्पर्धिनो
नृपाः सन्धिवद्धाः राजशेखरमुन्मूलयितुं नगरमाजग्मुः।
तदा राजा स्वदेव्या सह पाशक्रीड़ां करोति अथ देव्या
भणितम्। भो नाथ! भवता कथं तूष्णीं स्थीयते। प्रत्यर्थि
नृपैर्नगरीवेष्टिता। प्रभाते नगरमस्मानपि ते ग्रहीष्यन्ति।
राज्ञोक्तम्। भो मुग्धे! किं प्रयत्नेन यदा दैवमनुकूलं भवति
तदा सर्वं कार्य्यं स्वयमेव भवेत्। यदा प्रतिकूलं दैवं
तदा सर्वं स्वयमेव नश्यति। त्वया नानुभूतम्। अतो वृद्धौ-
क्षये च दैवमेव परं कारणम्।

वृक्षमूले स्थितस्य मे येन राज्यं दत्तं तस्यैव चिन्ता
पतिता। तेन चिन्तितव्य। अहोऽयं मय्येव। मयि स एव
चिन्तां करोतु अपि च ममापि चिन्ता स एव करिष्यति।
इति तस्य वाक्यं श्रुत्वा येनास्य राज्यं दत्तं तस्य चिन्ता प-
तिता विश्वस्य राज्यभारमर्पितवान्। यदि इदानीं मयास्य
प्रयत्नो न क्रियते। तर्हि महान् प्रत्यवायो भविष्यतीति
विचार्य स देवो भयङ्कररूपं कृत्वा सर्वान् शत्रून् अतर्जयत्।
ते सर्वे पराजिता बभूवुः। ततो राजशेखरो राजा निष्क-
ण्टकं राज्यमकरोत्। एषा कथा विक्रमेण कथिता। ततो
योगीन्द्र इमां कथां श्रुत्वा अतिसन्तुष्टः सन् राज्ञे काश्मीर-
लिङ्गमेकं दत्वा अभणत्। भो राजन्! एतत् काश्मीरलिङ्गं

चिन्तामणिरिव चिन्तितं वस्तु ददाति। एनं सम्यक् पूजय। राजापि तथास्तु इत्युक्त्वा तस्मै प्रणम्य यावन्नगरमार्गे आगच्छति तावद्‌ब्राह्मणः कश्चित् समागत्य राजानमाशीर्वादपूर्वकमवदत्।

भो राजन्! मम शिवलिङ्गपूजने नियमः मार्गे लिङ्गं नष्टं दिनत्रयमुपोषणं जातं तर्हि अद्यमेतच्छिव लिङ्गं दातव्यम्। राजापि तस्मै ब्राह्मणाय काश्मीरलिङ्गं दत्त्वा निजनगरमगमदिति कथां कथयित्वा पुत्तलिका भोजराजमवदत्। त्वयि एवमौदार्यादयो गुणा विद्यन्ते चेत् तर्ह्यत्र सिंहासने समुपविश।

---

## अथ पञ्चदशोपाख्यानम्।

पुनरन्या पुत्तलिकाब्रवीत्। शृणु राजन्! विक्रमार्के राज्यं कुर्वति तस्य पुरोहितो वसुमित्रः अत्यन्तरूपवान् सकलकलाभिज्ञः राज्ञोऽत्यन्तप्रियतमश्च परोपकारी सर्वलोकस्य महाधनसम्पन्नश्च आसीत् ततः तेन एकदा विचारितं ननु उपार्जितानां पापानां गङ्गास्नानादन्यत् पापक्षयकरं नास्ति। उक्तञ्च।

न हि तीर्थाभिषेकात् विद्यते पावनं परम्।
तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः॥ १॥
गतिमप्राप्य वै जन्तुर्गङ्गां संसेव्य तां व्रजेत्।
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैर्या नियतात्मनाम्॥ २॥

शुद्धिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ २ ॥
अपहृत्य तमस्तीव्रं यथा यात्युदयं रविः।
तथापहृत्य पापानि भाति गङ्गाजलाप्लुतः ॥ ३ ॥
अग्निं प्राप्य यथा सद्य स्तूलराशिर्विनश्यति।
तथा गङ्गाप्रवाहेण सर्वं पापं विनश्यति ॥ ४ ॥
यस्तु सूर्य्यांशुभिस्तप्तं गाङ्गेयं सलिलं पिबेत् ॥
स गव्यं विधियुक्तं हि पीत्वा पापात् प्रमुच्यते ॥ ५ ॥
चान्द्रायण सहस्रेण यः कुर्यात् कायशोधनम्।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातामुभावपि ॥ ६ ॥
भूतानामपि सर्वेषां दुःखाभिहतचेतसाम्।
गतिमन्वेषमाणानां नास्ति गङ्गा समा गतिः ॥ ७ ॥
महद्भिः पातकैर्ग्रस्तान् अनेकान् हतमानसान्।
पततो नरके घोरे गङ्गा तरति सेवनात् ॥ ८ ॥
सप्तावरान् सप्तपरान् पितॄंश्चापि हि वैध्रुवम्।
नरस्तारयते नित्यं गङ्गातोयावगाहितः ॥ ९ ॥
दर्शनात् स्पर्शनात् ध्यानात् तथा गङ्गेति कीर्त्तनात्।
पुनाति पुरुषं पुण्यं शतशोऽथ सहस्रशः ॥ १० ॥
जात्यन्धा रहितुल्यास्ते मृगैः पशुभि रेव च।
समर्था ये न पश्यन्ति गङ्गां पापप्रणाशिनीम् ॥ ११ ॥

इत्येवं विचार्य वाराणसीं गतो विश्वेश्वरं दृष्ट्वा प्रयागे पुनर्माघ स्नानं विधाय स्वनगराभिमुखमगच्छत्। मार्गे नगरमेकमासीत्। तत्र नगरे शापभ्रष्टा सुराङ्गना काचित् राज्यं करोति तस्याः भर्त्ता नास्ति। तत्र लक्ष्मीनारायणस्य महान् प्रासादोऽस्ति। तत्र विवाहमण्डपः कृतोऽस्ति तत्र

देवता प्रासाद द्वारे महति लौहपात्रे तैलं तप्यते तत्र नियुक्ताः पुरुषाः देशान्तरादागतानेवं वदन्ति। यदि कश्चित् सत्त्वाधिकोऽस्मिन् सन्तप्ततैलमध्ये पतिष्यति तस्येयं मन्मथसञ्जीवनी नाम्नी अप्सरा कण्ठे मालामर्पयिष्यति। वसुमित्रोऽपि सर्वं पश्यन् स्वनगरं ययौ सर्वैर्बन्धुभिः सह सन्दर्शनं जातम्। क्षेमेण आगत इति सर्वेषां आनन्दोऽभूत्। प्रभाते राजमन्दिरं गतः राजानं दृष्ट्वा राज्ञे गङ्गोदकं विश्वेश्वरप्रसादञ्च दत्त्वोपविष्टः। ततः राज्ञा पृष्टः भो वसुमित्र! क्षेमेण तीर्थयात्रा कृता तेनोक्तं भो स्वामिन्! तवप्रसादात्तीर्थयात्रां विधाय क्षेमेण समागतोऽस्मि। राज्ञोक्तम्। तत्र देशान्तरे गतेन किमपूर्वं दृष्टम्। वसुमित्रेण सुराङ्गनाततैल वृत्तान्तः कथितः। ततः राजा तेन सह तत्र स्थाने गतः तत्र स्नानं विधाय लक्ष्मीनारायणं नत्वा च तप्ततैलमध्ये पपात। तत्रत्यैस्तैर्जनैर्हाहाकारः कृतः। तदा राजशरीरं मांसपिण्डाकारमभूत्। तच्छ्रुत्वा मन्मथसञ्जीवनी अमृतमानीय मांसपिण्डस्याभिषेकमकरोत्। ततः राजा दिव्यरूपधरः पुरुषो जातः। ततो मन्मथ सञ्जीविनी यावद्राज कण्ठे मालामर्पयति। तावद्राज्ञा भणिता। भो मन्मथसञ्जीविनि! यदि त्वं मदीया भवसि तर्हि मद्वचः शृणु। तयोक्तं भो स्वामिन्! निरूप्यताम्। सर्वथा भवद्वचनं करिष्याम्येव। राज्ञोक्तम्। यदि मदुक्तं करिष्यसि तर्हि मत्पुरोहितं वृणीष्व। तयापि तथास्त्वित्युक्त्वा पुरोहितकण्ठे मालां निक्षिप्य विवाहमकरोत्। अथ राजा स्वनगरं गतः। इमां कथां कथयित्वा पुत्तलिका

भोजमवदत्। त्वय्येवं धैर्य्यं विद्यते चेत् तर्ह्यस्मिन् सिंहासने समुपविश।

---

# अथ षोड़शोपाख्यानम्।

पुनरन्या पुत्तलिकाब्रवीत्। शृणु राजन्! विक्रमार्को राजा दिग्विजयार्थं निर्गत्य पूर्वदक्षिणपश्चिमोत्तरदिशो विदिशश्च परिभ्रम्य तत्रत्यान् नृपतीन् पादतलाक्रान्तान् विधाय तैः समर्पितमन्यैरत्नाश्वादितवस्तुजातं गृहीत्वा पुनस्तान् स्वपदे संस्थाप्य निजनगरं प्रति समागतः। अथ नगरप्रवेशसमये दैवज्ञेनोक्तम्। भो देव! दिनचतुष्टयं नगरप्रवेशे मुहूर्तो नास्ति। तस्य वचनं श्रुत्वा राजा ग्रामाद्बहिरेव स्थितः। उद्यानवने पटमण्डपान् कारयित्वा तत्रैव दिनचतुष्टयं नेतु मुपक्रान्तवान्। तस्मिन् समये ऋतुराजो वसन्तः समागतः।

अथ वसन्तविलासं दृष्ट्वा सुमन्त्रिः मन्त्री राजसमीपमागत्योक्तवान्। भो राजन्! ऋतुराजो वसन्तः समायातः अत्र वसन्तपूजा कर्त्तव्या। तस्मिन् पूजिते सर्व्वेऽपि तव प्रसन्ना भविष्यन्ति। सर्व्वोऽपि लोकः सुखी भविष्यति सर्व्वस्याप्यरिष्टस्य शान्तिर्भविष्यति। तस्य वचनं श्रुत्वा राजा तथास्त्वित्यङ्गीकृत्य वसन्तपूजा-सम्पादने तमेव समादिदेश। तदनन्तरं स मन्त्री सुमनोहरं सभामण्डपं कारयित्वा वेदशास्त्र-सम्पन्नान् ब्राह्मणान् गीतवाद्याभिज्ञान् भरतान् नृत्यकला कुशला नर्त्तकीः समाह्वयत। तथा दीनान्धबधिर-

पञ्च कुमाराश्च स्वयमेवागताः। तत्र सभामण्डपे नवरत्नखचितं सिंहासनं स्थापितम्। तत्र लक्ष्मीनारायणप्रतिमाद्वयं प्रतिष्ठितम्। पूजार्थं कुङ्कुमकर्पूरकस्तूरिकाचन्दनागुरुप्रभृतीनि सुगन्धद्रव्याणि पुष्पाणि जातीयूथिकामल्लिकाकुन्दशतपत्रमदनचम्पककेतकीप्रभृतीनि समानीतानि। एवं विधानेन राजा स्वयं नारायणस्य स्नपनादि षोडशोपचारं कारयित्वा ब्राह्मणादिकलाकुशलजनान् वस्त्रादिना सम्भावितवान्। तदनन्तरं गायकाः वसन्तरागालापं कृत्वा वसन्तं जगुः। ततो राजा तेषां वीटिकां ददौ ततः कश्चिद्ब्राह्मणः समागत्य।

कल्याणदायि भवतोऽस्तु पिनाकपाणेः
पाणिग्रहे भुजगकङ्कणभूषितायाः।
संभ्रान्त दृष्टि सहसैव नमः शिवायै-
त्यर्धोक्ति लज्जित नतं मुखमम्बिकायाः॥

इत्याशिषः प्रयुज्य वदति। भो राजन्! विज्ञप्तिरस्ति। राज्ञोक्तम्। निवेदय। ब्राह्मणेनोक्तम्। अहं नन्दिवर्द्धननगरवासी ब्राह्मणः ममाष्टौ पुत्रा एव जाताः कन्या नास्ति ततः सभार्येण मया जगदम्बिकायाः पुरत एवं संकल्पः कृतः भो अम्बिके! मम कन्या यदि भविष्यति तदा तां तव नाम धारयिष्यामि। अन्यच्च कन्यया तुलितं सुवर्णं दास्यामि कन्यां च कस्मैचिद् वैदिकवराय दास्यामीति तर्हि तस्या विवाहकालो वर्त्तते एकादश स्थाने गुरुर्वर्त्तते पुनरागामि वत्सरे कर्तुं नायाति। अतो मया कन्यया तुलितं सुवर्णं दातुं इच्छामि। अन्यः कश्चित् विक्रमं विना राजा भूमण्डले नास्ति

इति तदन्तिकं समागतोऽस्मि। राज्ञोक्तम्। भो ब्राह्मण! साधु समनुष्ठितं त्वया तव यावता धनेन कार्यं भवति तावद्धनं गृहाणेति भाण्डारिकमाज्ञयोक्तवान्। भो भाण्डारिक! अस्मै ब्राह्मणाय एतत्कन्या तुलितं सुवर्णं देहि पुनरप्यष्ट-वर्गार्हमष्टकोटि सुवर्णं पृथग्दीयताम्। ततस्तेनाज्ञप्तो भाण्डारिकस्तस्मै ब्राह्मणाय तावत् सुवर्णं ददौ। ब्राह्मणो-ऽप्यतिसन्तुष्टः सन् कन्यया सह निजस्थानमगात्। राजापि शुभे मुहूर्त्ते पुरं प्रविवेश। अथ पुत्तलिकाब्रवीत् देव! त्वयि औदार्यं एवं चेत् तर्हि अस्मिन् सिंहासने समु-पविश। राजा तूष्णीमासीत्।

---

## अथ सप्तदशोपाख्यानम्।

पुनरन्या पुत्तलिकावदत्। शृणु राजन्! औदार्ये विक्रमसदृशो नासीत् तेन औदार्यगुणेन त्रिभुवने तस्य कीर्तिः विस्तारं गता। सर्वोऽप्यर्थिजनस्तमेव राजानं स्तौति। सर्वदा स्वस्तिवचनं दातृणामेव प्रीत्यै भवति। न तु शूराणाम्। उक्तञ्च।

दातृणामेव संप्रीत्यै स्वस्तिवाचो धनार्थिनाम्।
शूराणां हि प्रहाराय रसितं रणदुन्दुभिः॥

वीर्यधैर्यज्ञानानुष्ठानादयो गुणाः सर्वेषामेव भवन्ति। न तु त्यागगुणः।

मुह्यन्ति पशवः सर्वे पठन्ति च शुकादयः।
ददाति कोऽपि दानं यः स शूरः स च पण्डितः॥

केचित् स्वभाववीरा हि दयावीराश्च केचन।
ते सर्वे दानवीरस्य कलां नार्हन्ति षोडशीम्॥
त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः।
त्यागादेव हि पूज्यन्ते पशुपाषाणपादपाः॥
त्यागोगुणो गुणशताधिको हि मतो मे
विद्यापि भूषयति तं यदि किं ब्रवीमि।
शौर्यञ्च नाम यदि तत्र नमोऽस्तु तस्मै
तच्च त्रयं न च मदोऽप्यति विक्रमे यत्॥

एतच्चतुष्टयं तस्मिन् विक्रमार्के सदा आसीत्। एकदा परमण्डलस्थस्य कस्यचिद्राज्ञः पुरतः केनचित् स्तुतिपाठकेन विक्रमार्कस्य गुणावली पठिता। तेन राज्ञा तां श्रुत्वा मनसि स्पर्द्धां विधाय स्तुतिपाठकं प्रति उक्तम्। भो वन्दिन्! किमर्थमेते सर्वे स्तुतिपाठकाः विक्रममेव राजानं स्तुवन्ति किमन्यो राजा नास्ति। वन्दिनोक्तम्। भो राजन्! त्यागे उपकारे साहसे शौर्ये धैर्ये तेन सदृशो राजा त्रिभुवनेऽपि नास्ति। परोपकारकरणे स्वदेहेऽपि ममत्वं नासीत्। तस्य तद्वचनं श्रुत्वा स राजा अहमपि परोपकारं करिष्यामीति मनसि विचार्य कञ्चन योगिनमाहूय अवादीत्। भो योगिन्! परोपकार करणार्थं प्रतिदिनं नवं नवं द्रव्यं यथा भवति तथा कश्चिदुपायोऽस्ति नवा?। योगिनोक्तम्। भो राजन्! किमपि नास्ति। राज्ञोक्तम्। अस्ति चेत्तमुपायं ममाग्रे निवेदय अहं तं साधयामि। योगिनोक्तम्। कृष्णचतुर्दशी दिवसे चतुः षष्टियोगिनीचक्रं पूजनीयम्। तत्पुरतो मन्त्र पुरश्चरणं विधाय दशांश होमः

कर्तव्यः। होमावसाने पूर्णाहुतिनिमित्तं स्वशरीरमेवाग्नौ होतव्यं ततो योगिनी चक्रं प्रसन्नं भूत्वा राज्ञे नवं शरीरं दत्त्वा भणति भो राजन्! वरं वृणीष्व। राज्ञोक्तम्। भो मातरः यदि प्रसन्ना भवन्ति तर्हि मम गृहे सप्त महाघटाः सन्ति तान् प्रतिदिनं सुवर्णपूर्णान् कुर्वन्तु ताभिरेवमुक्तम्। त्वं एवं मासत्रयं प्रतिदिनं स्वशरीरमग्नौ होष्यसि चेत् तथा वयं करिष्यामः। राजापि तथास्त्वित्युक्त्वा प्रतिदिनं स्वशरीरमग्नौ जुहोति। एकदा विक्रमार्को राजा इमां वार्त्तां श्रुत्वा तत् स्थानं समागत्य पूर्णाहुतिसमये स्वयमेवाग्नौ पपात ततो योगिनीभिः परस्परं भणितं अद्य तन्वन्तरं मांसं अतीव स्वादुतरं विद्यते अस्य हृदयं महासारमस्ति। इति पुनस्तमुज्जीव्य भणितम्। भो महासत्व! को भवान्। तव शरीरत्यागे किं प्रयोजनम्। तेनोक्तम्। मया परोपकारार्थं शरीरमग्नौ हुतं योगिनीभिर्भणितं तर्हि वयं प्रसन्नास्मः। वरं वृणीष्व। राज्ञोक्तम्। यदि मम प्रसन्ना भवन्ति अतस्तर्हि अयं राजा मरणात् प्रतिदिनं महत्कष्टं प्राप्नोति। तत् निवारणीयम्। अस्य सप्त महाघटाः नित्यं सुवर्णेन पूरणीयाः। योगिनीभिर्भणितं तथा करिष्याम इति अङ्गीकृत्य राज्ञः मरणं निवारितम्। घटाश्च सुवर्णेन पूरिताः। अथ राजा निजनगरं प्रत्यागतः। इमां कथां कथयित्वा पुत्तलिका भोजमवदत्। भो राजन्! त्वयि एवं परोपकारो धैर्यं दया च विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश।

---

## अथ अष्टादशोपाख्यानम्।

पुनरपि भोजो यावत् सिंहासने समुपविशति। ताव-दन्या पुत्तलिका भणति। भो राजन्! विक्रमस्यौदार्यादयो गुणा भवन्ति चेत् तर्हि अस्मिन् सिंहासने अध्यासितव्यं राज्ञोक्तं नीतिमार्गं कथं कथ्यताम्। भो राजन्! श्रूयतां मणिपूरे गोविन्दशर्मा ब्राह्मणः सकल नीतिशास्त्रज्ञः स्वपुत्राय नीतिशास्त्रं कथयति तदा मयापि नीतिशास्त्रं श्रुतं तत् तुभ्यं निवेदयामि। राज्ञोक्तं निरूपय। पुत्तलिकयोक्तं श्रूयतां राजन्! बुद्धिमता पुरुषेण दुर्जनैः सह सङ्गो न कर्त्तव्यः। यतोऽनर्थपरम्परया हेतुर्भवति। उक्तञ्च।

दुर्जन सङ्गतावनर्थपरम्परायां
हेतुः सतामधिगतं वचनीयमत्र।
लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः॥

अपि च।

अपनयति विनयमनयं
घनयति यशः सततं यशसः।
निरयञ्चयति तरसा पुंसा-
मसतः समागमो जगति॥

सज्जनानां सङ्गोविधेयः। लोके सत्सङ्गात् परोलाभो नास्ति यतो महानन्दादयो गुणा जायन्ते। उक्तञ्च।

कन्दलयत्या नन्दं निन्दति मन्दानिलेन्दु चन्दनम्।
मदयति मन्दभावं सन्धते सम्पदोऽपि सत्सङ्गः॥

अन्यच्च। केनापि वैरं न कर्त्तव्यं परेषां सल्लापो न करणीयः। अनपराधतो भृत्या न दण्डनीयाः महादोषं विना स्त्री न त्याज्या यतो नरकभाक् भवति। उक्तञ्च।

आज्ञा सम्पादिनीं दक्षां सुरूपां शीलमण्डनाम्।
योऽदृष्ट दोषां त्यजति सोऽक्षयं नरकं व्रजेत्॥

लक्ष्मी स्थिरेति न मन्तव्या वार्य्यिव चञ्चला। उक्तञ्च।

अनुभव ददतु वित्तं मान्यान्मानय सज्जनान् भजत।
अति परुषपवन विलुलित दीपशिखेव चञ्चला लक्ष्मीः॥१॥

न स्त्रियै गुह्यं वचनं निवेदनीयम्। भविष्य चिन्ता न कार्य्या। वैरिणामपि हितमेव कथनीयम्। नित्यं दानाध्ययनादि विना दिवसं न यापयेत्। पित्रोः सेवा कर्त्तव्या। चौरैः सह सम्भाषणं न कर्त्तव्यम्। सर्वदा निष्ठुरमुत्तरं न वाच्यम्। अल्प निमित्तं न बहुकरणीयम्। उक्तञ्च।

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।
एतदेव हि पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम्॥१॥

आर्ताय दानं दातव्यम् धर्म्म स्थाने मनसा कर्मणा वाचा परोपकारः कर्त्तव्यः। एतत्सामान्य पुरुषाणां नीतिशास्त्रमुपदिष्टम्। स विक्रमो राजा स्वभावत एव नीतिशास्त्रज्ञः। एवं काले गच्छति एकदा कश्चित् वैदेशिको राजानं दृष्ट्वा उपविष्टः ततो राज्ञा भणितम्। भो देवदत्त! तव निवासः कुत्र तेनोक्तम्। भो राजन्! अहं वैदेशिकः मम कोऽपि निवासो नास्ति सर्वदा परिभ्रमणमेव करोमि राज्ञोक्तम्। पृथिवीं भ्रमता त्वया किं किं अपूर्वं दृष्टम्। भो राजन्! महदेकं आश्चर्यं दृष्टम्। राज्ञोक्तम्। किं दृष्टं

तेनोक्तम्। उदयाचलपर्व्वते आदित्यस्य महान् प्रासादोऽस्ति तत्र गङ्गा वहति गङ्गातटाके पापविनाशनं नाम शिवालय-मस्ति। तत्र गङ्गाप्रवाहात् कश्चित् सुवर्णस्तम्भो निर्गच्छति तस्य उपरि नवरत्नखचितं सिंहासनमस्ति। स सुवर्णस्तम्भः सूर्य्यो-दया दुपरि पूर्णवृद्धिं प्राप्नोति मध्याह्ने सूर्य्यमण्डलं प्राप्नोति ततः सूर्य्यो यावदस्तं प्राप्नोति तावत् स्वयमेव उत्तीर्णो गङ्गाप्रवाहे मज्जति। प्रतिदिनमेवं तत्र भवति। एतन्महदा-श्चर्यं मया दृष्टं राजा विक्रमोऽपि तच्छ्रुत्वा तेन सह तत् स्थानं गतो रात्रौ निद्राङ्गतः। प्रभात समये यावदुदयो भवति तावत् गङ्गाप्रवाहात् रत्नसिंहासनयुक्तो हेमस्तम्भोनिर्गतः। तस्मिन् समये स्तम्भे राजा स्वयमुपविष्टः स्तम्भोऽपि सूर्य्य-मण्डलं प्रति गन्तुं प्रवृत्तः यावत् सूर्य्यसमीपं गच्छति ताव-दग्निकणा सदृशैः सूर्य्यकिरणैः राजशरीर मांसपिण्डा-कारमभूत्। ततः पिण्डरूपेण सूर्य्यमण्डलं प्राप्य।

नमः सवित्रे जगदेकचक्षुषे
जगत् प्रसूति स्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चि नारायणशङ्करात्मने॥॥

इत्येवं नमश्चकार। सूर्य्यः स्तम्भं अमृतेनाभ्यसिञ्चत। राजा दिव्यशरीरी जातः। सूर्य्येणोक्तम् भो राजन्! त्वं महासत्वाधिकोऽसि एतन्मण्डल कस्याप्यगम्यं तत्र त्वं प्राप्तोऽसि तस्माद्हं प्रसन्नोऽस्मि वरं वृणीष्व। राजा वदति। किं मत्तोऽधिकः परोऽस्ति? यन्मुनीनामप्यगम्यं तव स्थानम्। तदहं प्राप्तः। तव प्रसादात् सर्वमप्यर्थं जातमस्ति तद-

अनेनाप्यतिसन्तुष्टः सूर्यो नवरत्नखचिते स्वकीय कुण्डले दत्त्वा भणति। भो राजन्! एतत् कुण्डलद्वयं प्रतिदिनमेकं सुवर्णभारं प्रयच्छति। ततो राजा कुण्डलद्वयं गृहीत्वा पुनः सूर्यं नमस्कृत्य तस्मादुत्तीर्य यावदुज्जयिनीं प्रति आगच्छति तावत् कश्चित् ब्राह्मणो मार्गे समागत्य।

वेदान्तेषु यमाहुरेक पुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितः प्राणादिभिर्मृग्यते
सस्थाणुः स्थिरभक्तियोग सुलभो निश्रेयसायास्तु वः॥१॥

इत्याशीर्वादमुच्चार्य्य भणति भो यजमान! अहं कुटुम्बी ब्राह्मणः परं दरिद्रः सर्वत्र भिक्षाटनं करोमि तथापि उदरं न पूरयामि। तच्छ्रुत्वा राजा कुण्डलद्वयं तस्मै दत्त्वा भणति। भो ब्राह्मण! एतत् कुण्डलयुगलं नित्यं सुवर्णभारमेकं तुभ्यं दास्यति तत् श्रुत्वा ब्राह्मणोऽतिसन्तुष्टो राजानं स्तुत्वा निजस्थानं जगाम। राजाप्युज्जयिनीमगात्। इति कथां कथयित्वा पुत्तलिका अब्रवीत् भो राजन्! त्वयि एवं औदार्यं धैर्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश। राजा तूष्णीं बभूव।

---

## अथ ऊनविंशोपाख्यानम्।

पुनरपि राजा यावत् सिंहासने समुपविशति तावदन्या पुत्तलिकावदत् भो राजन्! तव विक्रमस्यौदार्यादिगुणा भवन्ति तर्हि अस्मिन् सिंहासने समुपविश राज्ञोक्तं भो

पुत्तलिके ! कथय तस्य विक्रमस्यौदार्य्यादिगुण वृत्तान्तं सा कथयति श्रूयतां राजन् ! विक्रमे शासति सुमहति भूमण्डले सर्व्वोऽपि लोकः आनन्दपरिपूर्णः आसीत् । ब्राह्मणः षट्कर्म्म निरतः स्त्रियः पतिव्रताः शतायुषः पुरुषाः सदाफला वृक्षाः कामवर्षीपर्जन्यः मही सर्व्वदा सम्पूर्ण शस्यवती लोकानां पापात् भयं अतिथीनां पूजा जीवेषु दया गुरूणां सेवा; सर्व्वदा दानं एवं प्रजासु वृत्तिरासीत् । अथ विक्रमः एकदा सिंहासने उपविष्टोऽभूत् तत्र सभायामुपविष्टाः कीदृक् विधाः सामन्त राजकुमाराः केचित् स्तुति पाठकैः स्ववंशावलीः पाठयन्ति केचेनोद्धताः स्वभुजबलं स्वयमेव स्तुवन्ति केचन षड्विंशद्दण्डायुधसाधनाभिज्ञाः शस्त्रमूला युवानः अन्योऽन्यं हसन्ति । केचन शरणागतपरिपालनप्रवणाः एके परत्रविषये साधनाः केचन धर्म्मसंग्रहकारिणः एवंविधा राजकुमाराः । तदा कश्चित् पापर्द्धिः समागत्य राजानं प्रणम्यावदत् भो देव ! अरण्यमध्ये अञ्जनापर्वताकारो महान् वराहः समागतोऽस्ति तं देवः समागत्य पश्यतु तस्य वचनं श्रुत्वा राजा तैरेव राजकुमारैः सह वनङ्गत्वा नदीतटाके स्थितनिकुञ्जान्तर्गतं वराहमपश्यत् ततः स वराहो वीराणां कोलाहलं श्रुत्वा तस्मान्निकुञ्जान्निर्गतः । तदनन्तरं सर्व्वैः राजकुमारैः सह महत् स्वहस्त कौशलं दर्शयतः विक्रमस्य षड्विंशायुधानि तस्योपरि निपेतुः वराहस्तान्यायुधानि अगणयन् पर्वतान्तर्गतं कन्दरं विवेश । राजापि तस्य पृष्ठतो लग्नः पर्वतमगमत् । तत्र काञ्चनं बिलद्वारं दृष्ट्वा स्वयमेव बिलद्वारं प्रविष्टो महत्प्रकारी त्रियक्तं

दूरङ्गत: उत्तरत्र महान् प्रकाशोऽभूत्। तत: कियद् दूरे सु-
वर्णमयप्राकारं शुभ्रं शुभ्रं स्निग्धप्रासाद विशिष्टं नगरमेकं
अपश्यत्। तत्र च देवालयोपवनादिभिरलङ्कृतसमस्तवस्तुप-
रिपूर्णविपणिभूषितं धनिकलोकसमाकीर्णं नानाविलासी-
जनसेव्यमानं विलासिनीजनमतिमनोहरमपश्यत्। तत्र
प्रविश्य विपणिमध्ये यावत् प्रविशति तावदतीव मनोहरम-
ण्डपयुतं राजभवनमपश्यत्। तत्र विरोचनसुतो बलि: राज्यं
करोति। राजा राजभवने प्रविष्ट एव बलिना झटिति स-
मागत्य आलिङ्गित: अतिरमणीये सिंहासने च समुपवेशित:
पृष्टश्च भो स्वामिन्! भवत: कुत: समागति: विक्रमेणोक्तं
अहं भवत्सन्दर्शनार्थं समागतोऽस्मि। बलि: राजानं
भणति। अद्य मम सन्तति: पवित्रीभूता सफला च
जाता। बहुना पुण्योदयेन भवतोऽस्माकं गृहे आगति:
संवृत्ता।

अद्य मे बहुकालेन श्लाघनीयमभूदिदम्।
युष्मत् पादाम्बुजस्पर्शं सम्पन्नानुग्रहं गृहम्॥ १॥

विक्रमेणोक्तम्। भो राजन्! त्वं पवित्रीभूतान्त:करण:
तवैव जन्म श्लाघ्यं यत: साक्षाद्वैकुण्ठाधिपो नारायणस्तव
मन्दिरे सदा विराजति अथ बलिनोक्तम्। स्वामिन्!
किमागमनकारणम्। विक्रमेणोक्तम् भो दानवेन्द्र! अहं
भवद्दर्शनार्थं एव समागतोऽस्मि नान्यत् कारणम्। अथ
बलिनोक्तम्। यदि मयि मैत्रीं विधाय स्वामिना समागतं
तर्हि मयि कृपां कृत्वा किमपि वस्तु त्वया याचनीयम्।
विक्रमेणोक्तम्। मम किमपि न्यूनं नास्ति अहमपि तव

प्रसादात् सर्वत्र सम्पूर्णोऽस्मि। बलिनोक्तम्। भो स्वामिन्! भवतो न्यूनमिति न मयोच्यते किन्तु मैत्रीं उद्दिश्य ददामि यतो बुधा एवं मित्र लक्षणं वदन्ति। उक्तञ्च।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥ १॥
नोपकारं विना प्रीतिः कदाचित् कस्य जायते।
उपयाचित दानेन यथा देवा ह्यभीष्टदाः॥ २॥

अन्यच्च।

पुत्रादपि प्रियतमं नियतं हि दानं
मेने पशोरपि विवेकविवर्जितस्य।
दत्तं खलेऽपि निखिलं खलु वै न दग्धं
नित्यं ददाति महिषी खलु चानपत्या॥ ३॥

एवं भणित्वा तेन विक्रमाय राज्ञे रसायनं रसश्च दत्तः। ततः राजा तस्मादनुज्ञां प्राप्य विलनिर्गतोऽश्वमारुह्य यावद्राजमार्गं समायाति तावत् महद्दैन्ययुतो दरिद्रः पीड़ितः सपुत्रः कश्चित् वृद्धब्राह्मणः समागत्य।

कठिनतरदामवेष्टनरेखासन्देहदायिनो यस्य।
विलसन्ति बलिविभागाः स पातु दामोदरो भवन्तम्॥१॥

इत्याशिषमुक्त्वा भणति भो यजमान! अहं अत्यन्तदरिद्रः पीड़ितः बहुकुटम्बी ब्राह्मणः अद्य सकुटम्बस्य मम किमपि भोजनपर्य्याप्तं धनं देहि महत्या क्षुधा पीड़िता वयम्। राज्ञा भणितम्। भो ब्राह्मण! इदानीं मम हस्ते किमपि धनं नास्ति परं रसश्च रसायनञ्चेति वस्तुद्वयमस्ति अनेन रससम्पर्केण सप्त धातवः सुवर्णादयो भवन्ति। इदं

रसायनं यस्तु सेवते जरामरणरहितो भविष्यति उभयोर्मध्ये एकं गृहाण तदा पित्रा उक्तम्। येन रसायनसेवनेन जरा-मरणरहितो भविष्यामि तद्दीयताम्। पुत्रेणोक्तम्। किं क्रियते रसायनेन जरामरणरहितेनापि पुनर्दारिद्र्यमेवानु भवितव्यम्। येन रसेन सम्पर्के सति सुवर्णं भवति स ग्राह्यः इत्युभयोर्विवादो जातः ततः राजा उभयोर्विवादं श्रुत्वा रसं रसायनञ्च ताभ्यां ददौ। ततो ब्राह्मणः राजानं स्तुत्वा निजनिलयङ्गतः। राजापि निज भवनमगमत्। इमां कथां कथयित्वा पुत्तलिका अब्रवीत् भो राजन्! त्वयि एवं धैर्य्यं औदार्य्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने उपविश।

---

## अथ विंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् समुपवेष्टुं उपक्रमते तावदन्या पुत्तलिकाब्रवीत्। भो राजन्! यदि त्वयि विक्रमस्यौदार्यगुणवृत्तान्तादयः सन्ति तदा सिंहासने समुपविश राजा अवदत्। भो पुत्तलिके! कथय तस्य विक्रमस्यौदार्यगुणवृत्तान्तादीन्। पुत्तलिका वदति। श्रूयतां राजन्! विक्रमो राजा षण्मासं राज्यं करोति षण्मासं देशान्तरे गच्छति एकदा देशान्तरगतो नानादेशान् परिभ्रम्य पद्मालयं नाम नगरमगमत्। तस्य नगरस्य वहिस्थाने अति-विमलोदकं सरोवरं दृष्ट्वा तत्रोदकपानं कृत्वा उपविष्टः। ततोऽन्यतः अन्येऽपि केचन वैदेशिकाः समागत्य जलपानं विधायोपविष्टाः परस्परं गोष्ठीः कुर्वन्ति। अहो अस्माभिरनेका

देशा दृष्टा बहूनि तीर्थस्थानानि दृष्टानि अति दुर्गमा: कैरप्यनधिगम्या: पर्वता आरूढ़ा: परमेकत्रापि महापुरुष-दर्शनं नाभूत्। अन्येन भणितं कथं महापुरुषदर्शनं भविष्यति यत्र महासिद्धोऽस्ति तत्र गन्तु अशक्यम्। यत: मार्गोऽति दुर्गम: मध्ये अनेकविघ्ना: सम्भवन्ति देहस्य नाशो भवति। येनोद्यमे प्रथममात्मैव विनाशनं प्राप्नोति तस्य फलं कोवा अनुभविष्यति अत: कारणात् बुद्धिमता प्रथममेव आत्मा रक्षणीय:।

उक्तञ्च।

पुनर्दारा पुनर्वित्तं पुन: क्षेत्रं तथैवच।
पुन: शुभाशुभं कर्म्म शरीरं न: पुन: पुन:॥ १॥

तस्मात् बुद्धिमता पुरुषेण अकार्याणि न कर्त्तव्यानि। तथा चोक्तम्।

व्यसनानि दुरन्तानि सम्यगव्यय फलानि च।
अशक्यानि च कार्य्याणि नारभेत विचक्षण:॥ २॥

तथा च।

पर्वतं विषमं घोरं बहुव्यालसमाकुलम्।
नारोहेत नरं प्राज्ञ: संशयेऽपि कदाचन॥ ३॥

राजापि तस्य एवं वचनं श्रुत्वा भणति अहो वैदेशिक! किमेवमुच्यते यावत् पुरुषेण पौरुषं साहसञ्च क्रियते तावदेव सकलं कार्य्यं दुर्लभं न भवति। उक्तञ्च।

दुष्प्राप्याणि च वस्तूनि लभ्यन्ते वाञ्छितानि च।
पुरुषै: संशयारूढ़ै रलसैर्न कदाचन॥

तथा च।

कदाचिदेति नभसः खाते जलन्तु पातालात्।
दैवमचिन्त्यबलवत् बलवानिह साहसी ॥ १ ॥
क्लेशस्यागममदत्त्वा न लभ्यते सुखस्थानम् ।
मधुभिन्मथनायासैर्लब्धा चिरेण लक्ष्मीः ॥ २ ॥
तस्य न हि किमपि स्यात् विष्णोः सिंहकरस्य ।
निद्रां यो भजते मासांश्चतुर उदधौ स्थितः ॥ ३ ॥
दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
हरति तुलामधिरूढ़ो भास्वान् स्वजलदपटलानि ॥४॥

एतद्राजवचनं श्रुत्वा तैन उक्तं महासत्त्व ! किं कार्य्यं कथय। राज्ञोक्तं अस्मात् स्थानात् द्वादशयोजनपर्य्यन्तं यदि गम्यते तर्हि तत्र महारण्यमध्ये विषमः कश्चित् पर्वतो-ऽस्ति त्रिकालनाथो नाम योगीश्वरो विद्यते च। यदि तस्य दर्शनं क्रियते तर्हि स सर्वं वाञ्छितमर्थं दास्यति अहं तत्र गच्छामि तैरुक्तं वयमप्या गमिष्यामः राज्ञोक्तम्। सुखेन आगच्छ ततस्ते राज्ञा सह निर्गता महारण्ये मार्गमति विषमं दृष्ट्वा राजानं प्रोचुः भो महासत्त्व! कियद्दूरे पर्वतोऽस्ति। राज्ञोक्तम्। इत अष्टयोजनात् विद्यते। तर्हि वयं गमिष्यामो यद्यपि महद्दूरमस्ति मार्गोऽप्यति विषमः इति ब्रुवन्तः षड्योजनानि गत्वा पुरतो यावत् गच्छन्ति तावन्महाकालवदनः विषाग्निमुद्वमन् अति भय-ङ्करः कश्चित् सर्पो मार्गमावृत्य तिष्ठति। तेऽपि तत् सर्वं दृष्ट्वा सभयाः पलायाञ्चक्रुः। राजा पुनरपि मार्गे गन्तुं प्रवृत्तः। अथ सर्पः समागत्य राजानं वेष्टयित्वा सन्द-ष्टत्। ततः स विषवत् शरीरं वस्त्रखण्डेन आवेष्ट्य

दुर्गमं पर्वतमारुह्य त्रिकालनाथं योगिनं दृष्ट्वा ननमस्-
कार। योगीसन्दर्शनमात्रेण सर्पस्तं त्यक्त्वा गतः राजापि
निर्विषो बभूव योगिनोक्तम्। भो महासत्व!
महाप्रमादभूयिष्ठमेवममानुषं स्थानं अतिकष्टेन किमर्थ-
मागतोऽसि राज्ञोक्तम्। भो स्वामिन् अहं तव सन्दर्शनार्थं
आगतोऽस्मि योगिनोक्तम्। महत्कष्टं अनुभूतं खलु
त्वया। राज्ञोक्तम्। किमपि नास्ति भवत् सन्दर्शनमात्रेण
सकलमपि पातकं गतं कष्टं कृत्वा अद्याहं धन्योऽस्मि
यतो महतां दर्शनमतीव दुर्लभं अन्यच्च।

यावत् शरीरं सुदृढं यावत्सन्तीन्द्रियाणि च।
तावदेव च कर्तव्यं पुरुषैर्हि हितं सदा॥

तथाचोक्तम्।

यावत् स्वस्थमिदं शरीरमखिलं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्य्यः प्रयत्नो महान्
उद्दीप्ते भवने च कूप खनने प्रत्युद्यमः कीदृशः?॥ १॥

ततः प्रसन्नेन योगिना घुटिका योगदण्डः कन्था च
दत्ता उक्तञ्च। भो राजन्! अनया घुटिकया भूमौ या-
वत्यः रेखा लिख्यन्ते तावति योजनानि एकस्मिन् दिने
गन्तुं शक्यन्ते एनं योगदण्डं दक्षिण हस्ते धृत्वा स्पृशते
यदि तर्हि मृतसैन्यं सञ्जीवितं भूत्वा उत्तिष्ठति वाम हस्ते
धृत्वा स्पृशते यदि तदा सर्वस्यापि विपक्षस्य सैन्यनाशो
भवति इयं कन्थापि ईप्सितवस्तूनि प्रयच्छति राज्ञापि तत्
त्रयं गृहीत्वा योगिनं नमस्कृत्य अनुज्ञां लब्ध्वा यावद् गच्छति

तावद्राजमार्गे कश्चिद्राजकुमारः सम्मुखे अग्निं संस्थाप्य काष्ठानि सञ्चिनोति राजा तमपृच्छत्। भो सौम्य! किमेवं क्रियते तेनोक्तम्। अहं कश्चिद्राजकुमारः मम राज्यं दायादैरपहृतं दरिद्रोऽहं जीवनं धारयितुमक्षमः सन् अग्नौ प्रवेशं कर्तुं काष्ठानि सञ्चिनोमि ततो राजा तस्याभयं दत्त्वा घुटिकां योगदण्डं कन्थाञ्च ददौ। तेषां गुणानपि अकथयत् तदनन्तरं अतिसन्तुष्टो राजकुमारो राजानं प्रणम्य स्वदेशमगमत्। विक्रमोऽपि उज्जयिनीमगात्। इमां कथां कथयित्वा पुत्तलिका भोजराजानमवदत् भो राजन्! त्वयि यदि एवं औदार्य्यं विद्यते तर्हि अस्मिन् सिंहासने समुपविश। राजा तूष्णीं स्थितः।

---

## अथ एकविंशोपाख्यानम्।

पुनरपि राजा यावत् सिंहासने समुपविशति तावदन्या पुत्तलिका भणति तेन सिंहासने उपवेष्टव्यं यस्य विक्रमस्यौदार्य्यं भवति राजा अवदत् कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तं सा अब्रवीत्। श्रूयतां राजन्! विक्रमे राज्यं शासति बुद्धिसिन्धुनामा मन्त्री समभवत् तस्य पुत्रः अनर्गलोनाम सष्टतौदनं भुक्त्वा कुमारवृत्त्या तिष्ठति किमपि विद्याभ्यसनं न करोति एकदा पित्रा भणितं हे अनर्गल! त्वं ममोदराज्जातोऽपि परमतीव दुर्विदग्धः विद्याभ्यसनं न करोषि हृदयशून्यो मूर्खः सन् तिष्ठसि यस्तु हृदयशून्यः स एव मूर्खः उक्तञ्च।

अपुत्रस्य गृहं शून्यं शून्यदेशो ह्यबान्धवः।
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता॥ १॥
मम तव सम्बन्धे कोऽप्यर्थो नास्ति तथा हि।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः।
तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी॥१॥

अन्यच्च।

अजात-मृत-मूर्खेभ्यो मृताजातौ वरौ सुतौ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत्॥ १॥

अन्यच्च।

किं तेन जातु जातेन मातुर्यौवनहारिणा।
नारोहन्ति कुलं यस्य वंशस्याग्रे ध्वजो यथा॥ २॥

एतत् पितृवचनं श्रुत्वा पश्चात्तापयुक्तो अनर्गलो वैराग्यं प्राप्य देशान्तरं जगाम। तत्र देशान्तरे एकस्मिन्नगरे कस्यचिदुपाध्यायस्य सकाशात् सकलं नीतिशास्त्रं पठित्वा निजनगरं प्रति समागच्छत्। मार्गे अरण्यमध्ये देवालयमपश्यत्। तद्देवालयसमीपे पद्मिनी खण्डमण्डितं चक्रवाकयुगयुतं अतिविमलोदकं सरः आसीत्। तत्र सरोवरस्य एकदेशे अतिसन्तप्तमुदकं अस्ति एतत् सर्वं दृष्ट्वा तत्रोपविष्टे सूर्य्योऽस्तं गतः तदनन्तरं रात्रिसमये तस्मात् सन्तप्तोदकमध्यात् अष्टौ दिव्याः स्त्रियः निर्गता देवालयं गत्वा च देवस्याभिषेकादि षोड़शोपचारं कृत्वा नृत्यगीतादि कलया देवं तोषयामासुः। ततो देवः प्रसन्नो भूत्वा ताभ्यः प्रसादमदात्। एतत् सर्वमनर्गलोऽपि पश्यति प्रभाते निर्गमन समये ताभिरनर्गलो दृष्टः तासां मध्ये

एकया दिव्याङ्गनया भणितं भो सौम्य! एहि अस्माकं नगरं प्रति। इत्युक्ता सन्तप्तोदकमध्ये प्रविष्टा। सोऽपि तया सह गन्तुं इयेष। परं सन्तप्तोदकमध्ये तस्यां प्रविष्टायां अनर्गलो भयान्न प्रविष्टः। अथ स्वनगरमागत्य पित्रादिसर्वबन्धुजनान् अपश्यत् तेषां महानुत्साहो जातः। द्वितीयदिवसे राजसन्दर्शनार्थं राजसभां गत्वा राजानं प्रणम्य उपविष्टः राज्ञा कुशलं पृष्टोक्तम्। भो अनर्गल! एतावति दिनानि व्याप्य कुत्र स्थितोऽसि। तेनोक्तम् विद्याभ्यासं कर्त्तुं देशान्तरं गतोऽस्मि राज्ञोक्तम्। तत्र देशान्तरे किं किमपूर्वं दृष्टम्। अनर्गलेन राज्ञः सन्तप्तोदकवृत्तान्तः कथितः। तत् श्रुत्वा राजा तेन सह तत् स्थानं गतः। सूर्य्योऽप्यस्तं गतः मध्यरात्रिसमये ताः दिव्यस्त्रियः समागत्य देवस्य षोड़शोपचारान् विधाय नृत्यादिना देवमुपस्थाय प्रभाते यदा अगच्छन् तदा तासां मध्ये काचिदेका राजानं दृष्ट्वा समवदत् भो सौम्य! एहि अस्माकं नगरं प्रति। इति तत् श्रुत्वा राजापि तया सह निर्गतः सर्वाः स्त्रियः तप्तोदकमध्ये प्रविष्टाः सप्तपाताले निजनगरे गताः राजापि तप्तोदकमध्ये निमग्नस्ताभि सह गतः ततः सर्वाः स्त्रियः तस्य नीराजनाद्युपचारं कृत्वा प्रोचुः भो महासत्व! तव सदृशः शौर्य्यादिगुणसम्पन्नः कश्चित् नास्ति तर्हि अस्य राज्यस्याधिपतिर्भव वयं सर्वाः स्त्रियस्तव सेवां करिष्यामः राज्ञोक्तम्। मम अनेन राज्येन प्रयोजनं नास्ति अहमेतत् कौतूहलं द्रष्टुं समागतोऽस्मि ममापि राज्यमस्ति। ताभिरुक्तं भो महापुरुष! वयं प्रसन्नाःस्म

वरं वृणीष्व। राज्ञोक्तम्। भवत्यः का ताभिरुक्तं वयमष्टौ महा-सिद्धयः तर्हि मह्यं अष्ट महासिद्धयो दातव्याः। ततो राज्ञे ताः स्त्रियः अष्टौ रत्नानि ददुः। तान्येव अणिमाद्यष्ट गुण-युक्तानि। ततो राजा तानि रत्नानि गृहीत्वा यावदा-गच्छति तावन्मार्गे कश्चित् वृद्धो ब्राह्मणः समागत्य।

उषितोनाभिकमले हरेर्यश्चतुराननः।
स पातु सततं युष्मान् वेदानामादिपाठकः॥

इत्याशिषं प्रयुक्तवान् ततो राज्ञा पृष्टः भो ब्राह्मण कुतः समागम्यते तेन ब्राह्मणेनोक्तम्। अहं चम्पापुरनिवासी ब्राह्मणः बहुकुटुम्बी परं अत्यन्तदरिद्रः भार्यया निर्भत्सितो देशान्तरमागतः भो राजन्! लोकोक्तौ नीतौ च प्रसिद्धिः यत् निर्धनं नरं भार्यादयो परित्यजन्ति उक्तञ्च।

स्वामी वेशसुशोभितोऽपि बहुशः प्रोक्तोऽस्ति सद्बान्धवैः।
शीतन्तं सगुणास्त्यजन्ति मनुजं स्फारीभवन्त्यापदः॥
भार्या साधु सुवंशजा न भजते नो यान्ति मित्राणि च।
न्यायारोपितविक्रमानपि नरान् येषां न हि स्याद्धनम्॥१॥

तथा च।

गुरुः सुरूपः सुभगस्तु वाग्मी शास्त्राणि चास्त्राणि विदांवरस्तु।
अर्थं विना नैव कलाकलापं प्राप्नोति मर्त्यो हि मनुष्यलोके॥२

किञ्च।

तानीन्द्रियाणि विकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
सोऽप्यन्य एव भवतीति किमत्र चित्रम्॥ ३॥

राजा तस्य वचनं श्रुत्वा अतिसन्तुष्टः अष्टौ रत्नानि ददौ। सच राजानं स्तुत्वा निजनगरं जगाम। राजा-प्युज्जयिनी प्रति समागतः। इमां कथां कथयित्वा पुत्तलिका राजानमवदत् भो राजन्! तवेदृशं धैर्य्यं शौर्य्यादिकं अस्ति चेत् तर्हि अस्मिन् सिंहासने समुपविश तत् श्रुत्वा राजा तूष्णीं स्थितः।

---

## अथ द्वाविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यदा समुपविशति तावदन्यया पुत्तलिकयोक्तः भो राजन्! अस्मिन् सिंहासने तेनोप-वेष्टव्यं यस्य विक्रमस्यौदार्य्यादयो गुणा भवन्ति। राज्ञोक्तम्। भो पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तं सा अब्रवीत्। भो राजन्! शृणु विक्रमादित्यो राजा राज्यं प्रतिपालयन् एकदा पृथिवीपर्य्यटनार्थं निर्गत्य नानाविधाः तीर्थयात्रा देवालयं पुरपर्वतादिकं दृष्ट्वा कदाचिन्महारत्न-प्राकारपरिवृतमभ्रंलिहप्राकारोपशोभितं अनेकशिवालय हरिमन्दिर सहितमेकं नगरमपश्यत्। तत्र नगर बाह्य-स्थितः विष्णुगृहं गत्वा तत्रस्थिते सरोवरे स्नात्वा नमस्कृत्य।

मया न ज्ञायते नाथ! माहात्म्यं परमं तव।
न जानाति परोब्रह्मा हरिं वाचामगोचरम्॥ १॥
नान्यं भजामि न वदामि नचाश्रयामि
नान्यं शृणोमि न पठामि न चिन्तयामि।

भक्त्या त्वदीयचरणाम्बुजमादरेण
श्री श्रीनिवासपुरुषोत्तम ! देहि दास्यम् ॥ १ ॥

इत्यादि वाक्यैः स्तुत्वा रङ्गमण्डपे उपविष्टं ब्राह्मणं राजा अवदत् भो ब्राह्मण ! कुतः समागतोऽसि ब्राह्मणोऽवदत् अहं कश्चित् तीर्थयात्रिकः पृथ्वीविपर्य्यटनं करोमि भवान् कुतः समागतः। राज्ञा भणितं अहं भवादृशः कश्चित् तीर्थयात्रिकः ब्राह्मणेन सम्यक् विलोक्य भणितं भो नैवं अतीव तेजस्वी दृश्यसे राजलक्षणानि सर्वाण्यपि त्वयि दृश्यन्ते त्वं राजराजः सिंहासनयोग्यः पृथिवीपर्यटनं किमर्थं करोषि अथवा शिरसि लिखितं को वा लङ्घयति। तथा हि।

हरिणापि हरेणापि ब्रह्मणापि सुरैरपि।
ललाटे लिखिता रेखा न शक्या परिमार्जितुम् ॥ २ ॥

तस्य वचनं राज्ञाप्यङ्गीकृतं कुतः युक्तियुक्तविशिष्टं हि तत्।

युक्तियुक्तं उपादेयं वचनं बालकादपि।
विभुनापि सदा ग्राह्यं वृद्धादपि न दुर्वचः ॥ ३ ॥

भो ब्राह्मण ! किमर्थं अतिश्रान्त इव दृश्यते। तेनोक्तम्। श्रमकारणं किं कथयामि राजा अवदत् कथ्यतां कष्टस्य कारणं ब्राह्मणः कथयति श्रूयतां भो राजन् ! अत्र समीपे नीलो नाम पर्वतोऽस्ति तत्र कामाक्षी नाम देवतास्ति तत्र पाताल विवरद्वारं पिनद्धमस्ति तत् कामाक्षी मन्त्रजपेन समुद्घाटाते। मन्त्रमध्ये रसस्य कुण्डमस्ति तेन रसेन अष्टौ धातवः सुवर्णादयः भवन्ति मया द्वादशवर्षपर्य्यन्त कामाक्षी मन्त्र-

जप: अत: परं विवरद्वारं मोद्घाटाते इति। तावदेव तद्वचनं श्रुत्वा राजा यावत् कण्ठे खड्गं निक्षिपति तावद् देवतयोक्तम्। तवाहं प्रसन्नास्मि वरं वृणीष्व। राज्ञोक्तम्। भो देवि! यदि प्रसन्नासि तर्हि अस्मै ब्राह्मणाय रसं प्रयच्छ देवताऽपि तथास्त्वित्युक्त्वा विलद्वारं समुद्घाट्य ब्राह्मणाय रसं ददौ सोऽपि ब्राह्मणो राजानं स्तुत्वा निजनगरं जगाम। राजा च निजनगरीमगात् इति कथां कथयित्वा पुत्तलिका भोजराजानमवदत् भो राजन्! त्वयि एवं धैर्यं औदार्यं विद्यते यदि तर्हि अस्मिन् सिंहासने समुपविश।

---

## अथ त्रयोविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् उपवेष्टुं प्रयतते तावत् पुत्तलिका भणति भो राजन्! एतत्सिंहासनमधिरोढुं स एव योग्यो भवति यस्य विक्रमवदौदार्यं अस्ति राज्ञोक्तम्। भो पुत्तलिके! कथय तस्य विक्रमस्यौदार्यवृत्तान्तम्। पुत्तलिका कथयति श्रूयतां राजन्! एकदा राजा विक्रमार्को महीं परिभ्रम्य निजनगरं समागत:। नगरवासिनां सर्वेषां जनानां महानन्दोऽभूत्। राजा स्वभवनं प्रविश्य मध्याह्नसमये अभ्यङ्गस्नानादिकं कृत्वा चन्दनवस्त्रादिभिरलङ्कृत: सन् देव भवनं प्रविष्ट:। देवस्य षोडशोपचारं विधाय च देवस्तुतिं करोति।

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥१॥

इति देवं स्तुत्वा नमस्कृत्य ब्राह्मणेभ्यः कपिलाभूतिलादिदानानि दत्त्वा तदनन्तरं दीनान्धवधिरकुब्जपङ्गुनाथादिभ्यो भूरि दानं दत्त्वा भोजनगृहं प्रविष्टो बालसुवासिनीवृद्धादीन् सम्भोज्य स्वयमन्यैर्बन्धुभिः सह भुक्तवान्। तथा च उच्यते।

बालसुवासिनीवृद्धा गर्भिण्यातुरकन्यकाम्।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥ १॥
एक एव न भुञ्जीत य इच्छेत् सिद्धिमात्मनः।
ज्ञातिभिर्बन्धुभिः सार्धं भोजनं कारयेन्नरः॥ २॥
अभीष्टफलसंसिद्धिस्तुष्टिः काम्यं सुसम्पदः।
ज्ञातिभिर्बन्धुभिः सार्धं भोजनेतु प्रजायते॥ ३॥

ततो भोजनानन्तरं किञ्चित्कालं विश्राम्य समुपविष्टः उक्तञ्च।

भुक्तोपविशतोद्यैवं भुक्ता संविशतः सुखम्।
आयुष्यं क्रममाणस्य मृत्युर्धावति धावतः॥ १॥

अन्यच्च।

अत्यम्बुपानाद्विषमाशनाच्च दिवाशयाज्जागरणाच्च रात्रौ।
संरोधनान्मूत्रपुरीषयोश्च षड्विप्रकारेण भवन्ति रोगाः॥१॥

तदनन्तरं सन्ध्याकाले तात्कालिकं कर्म विधाय भोजनं कृत्वा शयनस्थानमागतः। तत्र शशिकरनिकरशुक्लप्रभप्रच्छदपरिस्तीर्णे कुन्दमल्लिकाशतपत्रादि कुसुमविकीर्णे मञ्चके स्थित्वा सुप्तः। प्रभातसमये स्वप्ने राजा स्वयमात्मानं महिषारूढं दक्षिणां दिशं गच्छन्तं दृष्ट्वा सहसा विष्णुं स्मरन् समुपविष्टः। प्रभातसमये सन्ध्याकर्म

समनुष्ठाय, सिंहासने समुपविष्टो ब्राह्मणानां पुरतः स्वप्न-वृत्तान्तं अकथयत्। तत् श्रुत्वा सर्वज्ञेनोक्तम्। भो राजन्! स्वप्नास्तु द्विविधाः सन्ति केचन शुभाशुभं फलं प्रयच्छन्ति केचन अशुभाः अरिष्टं प्रयच्छन्ति तत्र शुभाः स्वप्नाः गजारोहणं प्रासादारोहणं रोदनं मरणं अगम्या-गमनं छत्र-चामरसमुद्र-ब्राह्मण-गङ्गा-पतिव्रता-शङ्ख सुवर्ण-सन्दर्शनादयश्च उक्तञ्च।

आरोहणं गोवृष कुञ्जराणां प्रासादशैलाग्र वनस्पतीनाम्।
विष्ठानुलेपो रुदितं मृतञ्च स्वप्ने ह्यगम्यागमनञ्च धन्यम्॥१॥

अशुभं फलञ्च। महिषारोहणं खरारोहणं कण्टक-वृक्षारोहणभस्मकार्पासधूम्रव्याघ्रसर्पवराहवानरादिसन्दर्शनं उक्तञ्च।

खरोष्ट्रमहिषव्याघ्रान् स्वप्ने यस्त्वधिरोहति।
षण्मासाभ्यन्तरे तस्य मृत्युर्भवति निश्चितम्॥

अन्यच्च।

स्वप्नेषु प्रथमे यामे संवत्सर विपाक भाक्।
द्वितीये चाष्टभिर्मासै स्त्रिभिर्यामैः त्रिमासकैः॥१॥
गोविसर्ज्जनवेलायां सद्यस्तु फलमिष्यते॥२॥

किं बहुना भो राजन्! अयं स्वप्नः तवानिष्टकारी राज्ञोक्तं भो ब्राह्मण! अस्य दुःस्वप्नस्य उपशमनार्थं किं करणीयम्। स-र्वज्ञ भट्टेनोक्तं त्वं स्नानं विधायेश्वाविक्षणं कृत्वा सर्वमलङ्का-रजातं सवस्त्रादियुतं ब्राह्मणाय देहि पुनर्वस्त्रं परिधाय देवस्याभिषेकं कारयित्वा नवरत्नैः पूजां विधेहि ब्राह्मणेभ्यो गवादिदशधान्यानि देहि अन्धवधिरपङ्गुकानाथादीन्

भूरिदानेन सम्भावय। अनेनानुष्ठानेन ब्राह्मणाशीर्वचनेन च तव दुःस्वप्नजारिष्टफलनाशाय स्वस्ति भविष्यति। राजा एतत्सर्वं भट्टवचनं श्रुत्वा यथोक्तं अनुष्ठाय भूरिदानार्थं दिनत्रयं भाण्डारिकमुक्तवान्। ततो यस्य यावता धनेन तृप्तिर्भवति तेन तावद्धनं नीतम्। इति कथां कथयित्वा पुत्तलिका राजानमवदत् भो राजन्! त्वयि एवमौदार्यं धैर्यं विद्यते चेत्तर्हि अस्मिन् सिंहासने समुपविश राजा तूष्णीमासीत्।

---

## अथ चतुर्विंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् समुपविशति तावदन्या पुत्तलिका समवदत् भो राजन्! यस्य विक्रमस्यौदार्यादयो गुणा भवन्ति सोऽस्मिन् सिंहासने उपवेष्टुं क्षमः। भोजेनोक्तं पुत्तलिके! कथय तस्य विक्रमस्यौदार्यवृत्तान्तम्। सा अब्रवीत् श्रूयतां राजन्! विक्रमादित्यस्य विषये पुरन्दरपुरीनाम नगरी बभूव। तत्र महाधनिकः कश्चिद्वणिगासीत्। स चतुरः पुत्रान् आहूयावादीत् भोः पुत्राः! मयि मृते चतुर्णामेकत्रावस्थानं भवति वा नवा पश्चाद्विवादो भविष्यति तर्हि जीवन्नेव भवतां चतुर्णां ज्येष्ठानुक्रमेण भागं करोमि। अथ चतुर्णां भागं कृत्वा च मद्धनस्याश्चत्वारो भागाः मया निक्षिप्ताः सन्ति ज्येष्ठकनिष्ठभागक्रमेण गृह्णीध्वं तथा च तैरङ्गीकृतम्। ततस्तस्मिन् परलोकं गते चत्वारो भ्रातरो मासमेकत्र स्थिताः। ततः तेषां स्त्रीणां परस्परं कलहो

जातः। तदनन्तरं तैर्विचारितं किमर्थं कोलाहलः क्रियते पित्रा जीवतैव पूर्वं चतुर्णां विभागः कृतोऽस्ति तन्मञ्चा-धःस्थितं विभागक्रमं गृहीत्वा विभक्ताः सन्तः सुखेन तिष्ठाम इत्युक्त्वा यावन्मञ्चाधः खनन्ति तावच्चतुर्णां पादानां अधश्चत्वारि संपुटानि दृष्टानि तेषां मध्ये एकत्र संपुटे मृत्तिकाभूत् एकत्र अङ्गारा आसन् अन्यस्मिन् संपुटे अस्थीनि स्थितानि एकत्र पलालपुञ्जः स्थितः। एतत् चतुष्टयं दृष्ट्वा ते चत्वारः परस्परं विस्मयं गताः प्रोचुः अहो अस्मात् पितृकृतसम्यग्विभागक्रमात् अर्थविभागक्रमः केन ज्ञायते इत्युक्त्वा राज सभामपश्यन् तस्याः पुरतो निवेदितो वृत्तान्तः सभ्यैर्विभागक्रमो न ज्ञातः। पुनश्चत्वारः भ्रातरो यत्र यत्र ज्ञातारः सन्ति तेषां पुरतः अमुं वृत्तान्तं निवेदयन्तिस्म परं कोऽपि निर्णयं कर्त्तुं न शशाक। एकदा उज्जयिनीं समागताः। राज सभामागत्य राज्ञः सभायाश्च पुरतो विभागवृत्तान्तमकथयन्। ततो राज्ञः सभया विभागक्रमो न ज्ञातः। तदनन्तरं एकदा अन्यनगरमगमन् तत्रत्यानां महाजनानां पुरतो भणितुमारब्धं तैरपि निर्णयो न ज्ञातः तस्मिन् समये कुम्भकारगृहे स्थितः शालिवाहनो अमुं वृत्तान्तमाकर्ण्य तत्र गतान् महाजनान् प्रति भणतिस्म। भोः सभ्याः ! किमत्र दुर्बोधमस्ति किमाश्चर्य्यं च कथय सोऽवदत् एते चत्वारः एकस्य धनिकस्य पुत्राः। जीवता तेषां पित्रा ज्येष्ठकनिष्ठानुक्रमो विभागः कृतः तद्यथा।

ज्येष्ठस्य मृत्तिका दत्ता तेन या समुपार्जिता भूमिः सा सर्वथा दत्ता। द्वितीयस्य पलालपुञ्जो दत्तः। तेन

सर्वविधधान्यानि दत्तानि। तृतीयस्य अस्थीनि दत्तानि तेन सर्वेऽपि पशवो दत्ताः। चतुर्थस्याङ्गारो दत्तः तेन सकलमपि सुवर्णं दत्तं एवं शालिवाहनेन तेषां विभागः कृतः। तेऽपि सुखिनो भूत्वा स्वनगरं जग्मुः। राजा विक्रमोऽपि इमं विभागवृत्तान्तस्य निर्णयं श्रुत्वा विस्मयं गतः प्रतिष्ठा नगरीं प्रति पत्रिकां प्रेषयामास। स्वस्ति श्रीयजनयाजनाध्यापनदानप्रतिग्रह षट्कर्मनिष्ठान् यमनियमादिगुणनिष्ठान् प्रतिष्ठानगरवासिनो महाजनान् कुशलप्रश्नपूर्वकं राजा विक्रमः कथयति भवतां ग्रामे एषां चतुर्णां विभागनिर्णयकारी मदन्तिकं प्रेषयितव्यः। महाजना अपि राज्ञा प्रेषितां पत्रिकां वाचयित्वा शालिवाहनमाहूय कथयामासुः भोः शालिवाहन ! त्वां राजाधिराजपरमेश्वरः आसमुद्रपृथिवीपतिः विक्रमो राजा उज्जयिनीवासी सकलकलार्थश्लोककल्पद्रुमः समाह्वयति। त्वं तत्र गच्छ। तेनोक्तं विक्रमो राजा कोऽसौ ? तेनाहूतो न गच्छामि यदि तस्य प्रयोजनमस्ति स्वयमेवागच्छतु मम समीपे तेन किमपि प्रयोजनं नास्ति मम। तस्य वचनं श्रुत्वा महाजनैः स न यातीति पुनः पत्रिका राजानं प्रति प्रेषिता। ततः राजा पत्रिकालिखितार्थं श्रुत्वा क्रोधाग्निना देदीप्यमानविग्रहोऽष्टादशभिरक्षौहिणीबलैः सह निर्गत्य प्रतिष्ठानगरमागत्य शालिवाहनं प्रति दूतं प्रेषितवान्। ततस्तेनागत्य शालिवाहनो भणितः भो शालिवाहन ! राजाधिराजो विक्रमो राजा त्वामाह्वयति। तर्हि त्वं तस्य दर्शनार्थमागच्छ शालिवाहनेनोक्तं भो दूत ! अहं

एकाकी सन् राजानं न द्रक्ष्यामि षड़ङ्गबलोपेत: समराङ्गणे विक्रमस्य दर्शनं करिष्यामि। राज्ञे एव निवेदयन्तु भवन्त: तस्य वचनं श्रुत्वा दूता राज्ञे तथैवाचख्यु: तत् श्रुत्वा राजा विक्रमोऽपि समरभूमिमागत:। शालिवाहनोऽपि कुम्भकारगृहे मृत्तिकया कृतान् हस्त्यश्वरथपदातिबलान् मन्त्रेण समुज्जीव्य तेन षड़ङ्गबलेन नगरात् निर्गत्य समराङ्गणं प्रति समागत: तदा उभयदलनिर्गमसमये।

दिक्चक्रं चलितं तदा जलनिधिर्जातो भृशं व्याकुल:
पाताले चकितो भुजङ्गमपति: पृथ्वीधर: कम्पित:।
सोत्कम्पा पृथिवी महाविषभृत: क्रोडं नमत्युत्कटं
वृत्तं सर्वमनेकधा दलपतेरेवं चमूनिर्गतौ॥ १॥

पवनगतिसमानैरश्वयूथैरनन्तै-
र्मदधरगजयूथै: राजते सैन्यलक्ष्मी:।
ध्वजचमरवरास्त्रैरावृतं खं समस्तं
पटुपटहमृदङ्गैर्भेरिनादैस्त्रिलोके॥

तत: उभयदलं मिलितं तस्मिन् समये।

अश्वादे: खुररेणुभि र्बहुतरैर्व्याप्तं च शेषं नभ:
छत्रैरावृतमन्तरालमनिशं व्याप्तं च भेरीरवै:॥
निर्घोषै: रथजै: गजाश्वनिरदैस्तत्किङ्किणीनां रवै:।
वीराणां निनदै:प्रभूतभयदैरन्योन्यसेना बभु:॥ ३॥

खट्वाङ्गैर्भल्लशस्त्रै: खलखुरगगदा मुद्गराद्यैन्दुबाणै-
र्नाराचैर्भिन्दिपालैर्हलवरमुसलै: शक्तिकुन्तै: कृपाणै:।
पट्टीशै: शक्तिवज्रप्रभृतिभिरपरैर्दिव्यशस्त्रै: सुतीक्ष्णै:।
रन्योन्यं युद्धमेवं मिलितदलयुगे वर्त्तते सङ्कटानाम्॥ ४॥

तत्र रणे ।

एके वै हन्यमाना रणभुवि सुभटा जीवहीनाः पतन्ति
एके मूर्च्छां प्रपन्नाः स्वरपि निजबलैरुत्थिताः सम्भवन्ति ।
मुञ्चन्ते साट्टहासं निजनिकृतिपरं मानमाद्यं प्रसादं
भूत्वा धावन्ति चाग्रे जितमरणभयाः प्रौढ़िमङ्गे हि कृत्वा ॥५॥
एके वै शात्रवाणां समरभयवशात् त्रासमुत्पादयन्ति
एके सम्पूर्णघातैरुपहतवपुषो नाकनारीप्रियाःस्युः ।
एके वै वीरधूर्या रिपुहतजठरा भिद्यमानाश्च शस्त्रैः
अस्त्रैः सञ्छिन्नदेहा अपि भयरहिता वैरिभिर्यान्ति युद्धम् ॥६॥
तत्रारेश्छुरिकादि शस्त्र निचया भान्तीव मीनादयः
केशस्नायुशिराश्च जाल निवहैः शैवालवद् दृश्यते ।
यानीभेन्द्रकलेवराणि पतितानी हङ् न शम्भोर्मृधे
प्रेतानीव विभान्ति तानि रुधिरे चास्थीनि शङ्खा इव ॥७॥

ततो विक्रमार्केण शालिवाहनस्य सैन्यं सर्वं पातितं शालिवाहनोऽपि शेषनागेन्द्रं संस्मार शेषेण सर्पाः प्रेषिताः ते सर्पैर्दष्टं विक्रमादित्यसैन्यं विशेषेण मूर्च्छितं रणाङ्गणे पपात । तदनन्तरं विक्रमार्को राजा एकाकी निजनगरं जगाम। स्वसैन्य सञ्जीवनार्थं अब्धोदके स्थित्वा नववर्षपर्य्यन्तं वासुकिमन्त्रमनुष्ठितवान् । ततो वासुकिः तस्मै प्रसन्नो-भूत्वा बभाण भो राजन् ! वरं वृणीष्व विक्रमेण भणितं भो सर्पराज ! यदि मम प्रसन्नोऽसि तर्हि सर्पविषवेगेन मूर्च्छितस्य मम सैन्यस्य सञ्जीवनार्थं अमृतघटं देहि अथ वासुकिना अमृत घटोदत्तः। तममृतघटं गृहीत्वा राजा विक्रमो यावत् मार्गे समायाति तावद् ब्राह्मणः कश्चिदागत्य

हरेर्लीलावराहस्य दंष्ट्रा दण्डः पुनातु वः।
हिमाद्रिशिखरस्येव धात्री यस्य श्रियं दधौ ॥ १ ॥

इत्याशिषमुक्तवान् ततो राज्ञा भणितं भो ब्राह्मण! कुतः समागतोऽसि ब्राह्मणेनोक्तम्। अहं प्रतिष्ठा नगरादागतः राज्ञोक्तम्। किं वदसि ब्राह्मणो वदति भवान् अर्थिजनचिन्तामणिः यतश्चिन्तितं वस्तु दातुं समर्थः अतो ममैकस्मिन् वस्तुनि प्रीतिरस्ति तद्दीयते तर्हि वदामि। राज्ञोक्तम्। यत् त्वया याच्यते तत् दास्यामि ब्राह्मणेनोक्तम्। मह्यममृतघटो दातव्यः राज्ञोक्तम्। त्वं केन प्रेषितोऽसि ब्राह्मणेनोक्तम्। अहं शालिवाहनेन प्रेषितः तत् श्रुत्वा राज्ञा विचारितं मया पूर्वं अस्मै दास्यामि इति भणितं इदानीं न दीयते चेत् अपकीर्त्तिरधर्मोऽपि भविष्यति अतः सर्वथा दातव्यमेव। ब्राह्मणेन भणितं भो राजन्! किं विचारयति? भवान् सज्जनः। सज्जनस्य भाषणे पुनरन्यथा न भवति तथा चोक्तम्।

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीतलो याति वह्निः।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरन्यद् भाषणं सज्जनानाम् ॥ १ ॥

राज्ञोक्तम्। सत्यमुक्तं भवता। तथैव क्रियते गृह्यतां अमृतघटः। अथ तस्मै घटं ददौ। सोऽपि ब्राह्मणो राजानं स्तुत्वा निजस्थानं गतः। राजापि उज्जयिनीमगात्। इमां कथां कथयित्वा पुत्तलिका भोजराजानमवोचत् भो राजन्! त्वयि एवमौदार्यं धैर्यं विद्यते तर्हि अस्मिन् सिंहासने समुपविश।

# अथ पञ्चविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् समुपविशति तावद्-न्यया पुत्तलिकयोक्तं भो राजन्! यस्य विक्रमस्यौदार्यादिगुणाः सन्ति तेनैव उपवेष्टव्यम् पुत्तलिके! कथय विक्रमस्य औदार्य्यं वृत्तान्तम्। सा अब्रवीत् श्रूयतां राजन्! विक्रमादित्ये राज्यं शासति एकदा कश्चित् ज्योतिषिकः समागत्य।

सूर्यः शौर्य्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः
सद्बुद्धिञ्च बुधो गुरुश्च गुरुतां शुक्रः सुतं शं शनिः।
राहुर्बाहुबलं करोतु नियतं केतुः कुलस्योन्नतिं
नित्यं प्रीतिकरा भवन्तु भवतां सर्वेऽनुकूला ग्रहाः॥१॥

इत्याशिषमुक्त्वा पञ्चाङ्गानि कथयामास। अथ भूपतिः ज्योतिषिकमपृच्छत् भो दैवज्ञ! अस्मिन् संवत्सरे राजा रविः मन्त्री भौमः मेघाधिपो भौमः। शनैश्चरो रोहिणी शकटं भित्त्वा यास्यति तस्मात् सर्वथा अनावृष्टिर्भविष्यति उक्तञ्च। वराहमिहिर संहितायाम्।

यदाद्यर्कसुतो भंक्ते रोहिणी शकटं खलु।
भित्त्वा न वर्षति तदा मेघो द्वादशवर्षाणि॥

तथा च।

रोहिणी शकटमर्कनन्दनश्चेद्भिनत्ति रुधिरोघ भाक् मही।
किं ब्रवीमि न हि वारिसागरे सर्वलोक उपयाति संक्षयम्॥१
मतान्तरे च। यदा भिनत्ति मन्दोऽयं रोहिण्या शकटं तदा।
वर्षाणि द्वादशानीह वारिवाहो न वर्षति॥२॥

एतद्दैवज्ञ वचनं श्रुत्वा राजा अब्रवीत्। तस्यावर्षणस्य

कोऽप्युपायोऽस्ति? दैवज्ञेनोक्तम्। कुतो नास्ति। कमपि ग्रहहोमादिकं क्रियते चेत् वृष्टिर्भविष्यति ततो विक्रमो राजा श्रोत्रियान् ब्राह्मणान् आहूय तेषां पुरतः पूर्ववृत्तान्तं उक्त्वा तैर्होमं कारयितुमारब्धवान्। ततः सर्वाऽपि होमसामग्री सम्पादिता। राज्ञा द्रव्यान्नवस्त्रादिना ब्राह्मणाः सन्तोषिताः दश दानानि दत्तानि। तदनन्तरं भूरिदानेन दीनान्धबधिरपङ्गुनाथादयः सन्तोषिताः। परं वृष्टिर्न भवति तदभावेन सर्वा लोकाः बुभुक्षिताः परं क्लेशमगमन्। राजापि तेषां दुःखेन स्वयं दुःखितः सन् एकदा यज्ञशालायां समुपविष्टो यावच्चिन्तयति तावदशरीरिणी वागासीत् भो राजन्! पुरस्थित-देवालय-निवासिनी देवी ते आशां पूरयिष्यति देवतायाः पुरतो द्वात्रिंशल्लक्षणयुक्तस्य पुरुषस्य शिरःछित्वा बलिः दीयते चेत् वृष्टिर्भविष्यति। तत् श्रुत्वा राजा देवालयं गत्वा देवीं नत्वा यावत् खड्गं शिरसि दधाति तावद्देवतया धृतो भणितश्च भो राजन्! तव धैर्येण प्रसन्नाऽस्मि वरं वृणीष्व राजा वदति भो देवि! यदि मम प्रसन्नासि तर्हि अनावृष्टिं निवारय। देवतयोक्तं तथा करिष्यामि। ततो राजा निजसभामागतः इमां कथां कथयित्वा पुत्तलिका भणति भो राजन्! यदि त्वयि एवं धैर्य्यं परोपकारवासना च विद्यते तर्हि अस्मिन् सिंहासने समुपविश।

---

## अथ षड्विंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् समुपविशति तावदन्यया पुत्तलिकयोक्तम्। भो राजन्! अस्मिन् सिंहासने स एव उपवेष्टुं योग्यः यस्य विक्रमस्यौदार्यादयो गुणा भवन्ति। भोजेनोक्तम्। पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यवृत्तान्तं सा अब्रवीत् भो राजन्! श्रूयतां औदार्य दया विवेक धैर्यादिगुणैः अन्यो विक्रमसदृशो राजा नास्ति अन्यच्च यदुक्तं तदन्यथा न करोति यच्चित्ते स्थितं तत् तथैव वदति यद्वचने स्थितं तत् तदेव करोति अतः सज्जनोऽयं उक्तञ्च।

यथाचित्तं तथावाक्यं यथावाक्यं तथा क्रिया।
चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता॥

एकदा सुरनगर्य्यां इन्द्रः सिंहासने उपविष्टोऽभूत् तस्य सभायामष्टाशीतिसहस्राणि ऋषीणां आसन्। त्रयस्त्रिंशत्कोट्यः देवता उपविष्टा आसन्। अष्टौ लोकपालाः एकोनपञ्चाशन्मरुद्गणाः द्वादशादित्याश्च नारदः तुम्बुरुश्च उर्वशीमेनकारम्भातिलोत्तमामिश्रकेशी घृताचीमञ्जुघोष प्रियदर्शना प्रभृति दिव्यस्त्रिय उपविष्टा बभूवुः। सर्वोऽपि गन्धर्वाणां गणः उपविष्टोऽभूत्। तस्मिन्नवसरे नारदेन उक्तं अधुनादि भूमण्डले विक्रमार्क सदृशः कीर्तिमान् परोपकारी महासत्वसम्पन्नो राजा नास्ति तद्वचनमाकर्ण्य सर्वे देवसभास्थिताः परं विस्मयं जग्मुः। कामधेनुरपि भवति कोऽत्र सन्देहः विस्मयोऽपि न कार्यः उक्तञ्च।

दाने तपसि शौर्य्ये च विज्ञाने विनये नये।
विस्मयो न च कर्त्तव्यो बहुरत्ना हि वसुन्धरा॥ १॥

तथा च, वाजिवारण लौहानां काष्ठपाषाणवाससाम्।
नारीपुरुषतोयानां अन्तरं महदन्तरम्॥

तदनन्तरं इन्द्रेण सुरभिः भणिता त्वं मर्त्यलोकं गत्वा विक्रमस्य दयापरोपकारादीन् गुणान्निश्चित्य मम निवेदय इति। ततः सुरभिरत्यन्तदुर्बलं गोरूपं धृत्वा मर्त्यलोकं गता। यावत् विक्रमार्को मार्गे समायाति तावत् स्वयं अत्यन्तदुस्तरे पङ्के निमग्ना आसीत्। राजानं दृष्ट्वा च कातरं शब्दं चकार राजापि तत्समीपमागत्य यदा पश्यति तदा अतिसङ्कीर्णे दुस्तरे पङ्के निमग्ना आसीत् तत्समीपे व्याघ्रः कश्चित् समुपविष्टो अस्ति। राजनि तां गां उत्थापयितुं प्रयत्नं क्रियमाणे सूर्य्योऽप्यस्तं गतः। अथ रात्रिरागता। सोऽपि अनाथां तां गां रक्षन् तत्रैव स्थितः। ततः सूर्य्योदयो जातः। गौरपि राज्ञो दयाधैर्यादिगुणान्निरीक्ष्य स्वयमेवोत्थिता राजानमवदत् भो राजन्! अहं सुरभिधेनुः तव दयादिगुणानवलोकयितुं स्वर्गात् समागता तव प्रत्ययो दृष्टः त्वत्सदृशो राजा दयापरो भूतले नास्ति अहं प्रसन्नाऽस्मि वरं वृणीष्व राज्ञा भणितं त्वत्प्रसादात् मयि न्यूनता नास्ति किं मया प्रार्थ्यते तयोक्तं मम वाक्यं कथमपि निःष्फलं न भवति तर्हि अहं तव समीपे एव तिष्ठामि इति राज्ञा सह निर्गता। ततो राजा यावत् तया सह मार्गे गच्छति तावत् ब्राह्मणः कश्चिदागत्य।

सानन्दं नन्दिहस्ताहतमुरजरवाहूत कौमारबर्हि-
त्रासान्नासाग्र रन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि।

गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधूतयः पान्तु चीत्कारवत्यः॥

इत्याशिषं प्रयुज्याब्रवीत्। भो राजन्! अहं दरिद्रः
कृतः अतोऽहं सर्वान् जनान् पश्यामि मां केचन न
पश्यन्ति।

दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः।
जगत् पश्यामि येनाहं न मां पश्यन्ति केचन॥

यस्तु दारिद्र्यमुद्रितस्तस्य गृहे सर्वदा सूतकमेव
भवति।

स्वग्रासं पथिकाय देहि सुभगे! नो नो गिरो निष्फलाः
कस्मात्? ब्रूहि, सखे! नु सूतकमिदं कालावधिर्नास्तिको।
यावज्जीवमिदं न याति विषमं पुत्रोद्भवं सूतकं
को जातो मयि सर्ववित्तरहिते? दारिद्र्यनामासुतः॥

राज्ञोक्तम्। भो ब्राह्मण! किं याचसे? ब्राह्मणेन भणितं
भो राजन्! भवान् आश्रितकल्पवृक्षः यावज्जीवं मम
दारिद्र्यविच्छित्तिर्यथा भवति तथा विधेयं राज्ञोक्तं तर्हि
इयं कामधेनुस्तवेप्सितं दास्यति इमां गृहाण इति तस्मै
कामधेनुं प्रादात्। ब्राह्मणः स्वर्गसुखं गत इव कामधेनुं
गृहीत्वा निजस्थानं जगाम। राजापि निजनगरीमगात्।
इमां कथां कथयित्वा पुत्तलिका भोजराजानं जगाद भो
राजन्! त्वयि एवमौदार्य्यं यदि विद्यते तर्हि अस्मिन्
सिंहासने समुपविश राजा तूष्णीं अभूत्।

## अथ सप्तविंशोपाख्यानम् ।

पुनरपि राजा सिंहासने उपवेष्टुं यावत् प्रयतते तावदन्या पुत्तलिका भणति भो राजन्! यस्य विक्रमस्येव औदार्य्योदयो गुणा भवन्ति सोऽस्मिन् सिंहासने उपवेष्टुं क्षमः। भोः पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यादिगुणवृत्तान्तम्। सा अब्रवीत् श्रूयतां राजन्! विक्रमोराजा पृथिव्यां पर्य्यटन् नगरमेकमगमत्। तत्रान्यो राजा अतीव धार्मिकः श्रुतिस्मृतिविहितानुष्ठानपरः तत्र स्थितान् ब्राह्मणादिचतुर्वर्णान् सम्यक् प्रतिपालयतिस्म सर्वो लोकः सदाचाररतः अतिथिप्रियो दयापरश्च। राजा विक्रमोऽपि दिनत्रयं दिनपञ्चकं वा तत्र स्थास्यामि इति कृतनिश्चयः कञ्चन अतिमनोहरं देवालयं गत्वा देवं नमस्कृत्य रङ्गमण्डपे उपविष्टः। अत्रान्तरे कश्चिद्राजकुमार इव अतिमनोहररूपो दुकूलवस्त्रधारी नानाभरणालङ्कृतशरीरः कुङ्कुमकर्पूरकस्तूरीमृगमदमिश्रितैः चन्दनैर्विलिप्ततनुः यैः सह तत्रागतः तैः सह नानाविधकानकथाप्रस्ताव विनोदादिकं विधाय पुनस्तैः सह निर्गतः। राजापि तं दृष्ट्वा कोऽयमिति विचारयन् स्थितः। ततो द्वितीयदिने स एव एकाकी वस्त्रादिरहितः कौपीनमात्रशेषः सन् समागत्य देवालयस्य रङ्गमण्डपे पपात। राजा तं दृष्ट्वा भणति भो देवदत्त! पूर्वेद्युः अलङ्कृतशरीरो राजकुमार इव वयस्यैः संसेव्यमानोऽत्र समागतः अद्य किमीदृशीं कष्टां दशां प्राप्तोऽसि तेनोक्तम्। भो स्वामिन्! किमेवमुच्यते अहं पूर्वेद्युस्तदा तथैव स्थितः इदानीं दैवयोगात् एवं तिष्ठामि। तथा हि,

ये वर्द्धिताः करिकपोलमदेन भृङ्गाः
प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः।
ते साम्प्रतं विधिवशात् क्षपयन्ति कालं
निम्बेषु चार्ककुसुमेषु च चत्वरेषु॥

तथा च।

रस सह कारताली परिमलकेलि परायणो मधुपः।
अधुना हतविधिवशादर्कवने शरभसङ्कुले भ्रमति॥

तथा च, ये वर्द्धिताः कनकपञ्जर रेणुमध्ये
मन्दाकिनी विमलनीरजरङ्गभङ्गे।
ते साम्प्रतं विधिवशात् कलहंसपोताः
शैवालमालजटिलं जलमाविशन्ति॥

अपि च, वातान्दोलितपङ्कजच्युतरजः पीठाङ्गरागोज्ज्वलो
यः श्रुत्वोत्कलकूजितं मधुलिहां सञ्जातहर्षोत्सवः।
कान्ताचञ्चुपुटाञ्चलस्थितविसग्रासग्रहेऽप्यक्षमः
सोऽयं सम्प्रति हंसको विधिवशात् काष्ठं तृणं याचते॥

अन्यच्च कर्मणा नियमितो जनः किं कष्टं न प्राप्नोति।

तथा चोक्तम्।

ब्रह्मा येन कुलालवत् नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतार गहने क्षिप्तो महा सङ्कटे।
रुद्रो येन कपालपाणिपुटको भिक्षाटनं कारितः
सूर्य्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे॥

राज्ञा भणितं को भवान्? तेनोक्तं अहं द्यूतकारः। राज्ञोक्तम्। द्यूतक्रीड़ां जानासि,किं? तेनोक्तं द्यूतविद्याविषये अहं विचक्षणः। अन्यच्च। सारीक्रीड़ां जानामि बुद्धि-

बलं जानामि परं सर्वमेव तदनर्थकं दैवमेव बलवदिति।

उक्तञ्च, गजभुजङ्गविहङ्गमबन्धनं

शशिदिवाकरयोर्ग्रहपीड़नम्।

मतिमताञ्च निरीक्ष्य दरिद्रतां

विधिरहो बलवानिति मे मतिः॥

तथा च, नैवाकृतिः फलति नैव कुलं न शीलं

विद्यापि नैव न च यत्नकृताऽपि सेवा।

भाग्यानि पूर्वतपसा खलु सञ्चितानि

काले फलन्ति पुरुषस्य यथैव वृक्षाः॥

राज्ञोक्तम्। भो देवदत्त! त्वमेवं अतिप्राज्ञोऽपि कथमेवं अतिपापे द्यूतकर्मणि रतोऽसि तेनोक्तम्। प्राज्ञोऽपि पुरुषः कर्मणा प्रेर्य्यमाणः किं किं न करोति उक्तञ्च।

किं करोति नरः प्राज्ञः प्रेर्य्यमाणः स्वकर्मभिः।

प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी॥

राज्ञा भणितम्। भो देवदत्त! द्यूतं महदापन्मूलं सर्वेषां व्यसनानामाश्रयो द्यूतमेव च उक्तञ्च।

भवनमिदमकीर्त्तिश्चोरवेश्याङ्गनानां

व्यसनपतिरुदारः सन्निधिः पापभाजाम्।

विषम नरकमार्गे प्रज्ञया ह्यत्र को हि

विमलविशद बुद्धिर्द्यूतमङ्गीकरोति?॥

तथा च।

क्व कीर्त्तिः क्व दरिद्रता क्व विपदः क्व क्रोध लोभोदय-

चौर्य्यादिव्यसनं क्व वा हि नरके दुःखं मृतानां नृणाम्।

यद्दुर्व्यसनगुर्वमोहतो हि मनुजो दुःखेषु निक्षिप्यते

प्राणो वा भुवि दुर्जनेषु सकलैर्नष्टेषु च स्मर्यते ॥

तस्मात् कारणात् महापापानि सप्त व्यसनानि त्याज्यानि उक्तञ्च ।

द्यूतमांस सुरावेश्या खेटचौर्य्य पराङ्गना ।

महापापानि सप्तैव व्यसनानि त्यजेद् बुधः ॥

अन्यच, यस्त्वेक व्यसनायुक्तो निर्गमे च न पश्यति ।

किं पुनः सप्तभिर्युक्तो व्यसनैः सङ्कुलः पुमान् ॥

तथा हि ।

द्यूतात् धर्मसुतः पलादिह बको मद्याद् यदोर्नन्दना-
श्चोरः कामवशात् मृगान्तकरणात् स ब्रह्मदत्तो नृपः ।
चौर्यत्वाच्छिव भूतिरन्यवनितासङ्गाद् दशास्यो हठा-
देकैक व्यसनाहता इति नराः सर्वैर्न को नश्यति ॥

अतस्त्वया एतानि परित्याज्यानि । द्यूतकारेणोक्तम् । भो स्वामिन्! मम तदेव जीवनम् कथं परित्यज्यते यदि त्वं ममोपरि कृपां विधाय कमपि धनार्जनोपायं कथयिष्यसि तर्हि अहं द्यूतं त्यक्ष्यामि अस्मिन्नवसरे विदेशवासिनौ द्वौ ब्राह्मणावागत्य देवालयस्य एकदेशे समुपविष्टौ परस्परं मन्त्रयन्तः तत्र एकेनोक्तम्। मया च सर्वोऽपि पिशाचलिपि-कश्चोऽवलोकितः तत्र एवं लिखितमस्ति अस्य देवालयस्य ईशानभागे पञ्चधनुप्रमाणे दीनारपूरितं घटत्रयं स्थापित-मस्ति तत्समीपे भैरवस्य प्रतिमास्ति भैरवं स्वरक्तेन सेचयित्वा ग्राह्यमिति राजापि तस्य वचनमाकर्ण्य तत्र गत्वा स्वदेह रक्तेन भैरवं यावत् सिञ्चति तावत् प्रसन्नेन भैरवेण भणितं भो राजन्! वरं वृणीष्व राज्ञोक्तम्। कस्मै

द्यूतकाराय दीनारपूरितं घटत्रयं देहि ततो भैरवेण तद्धनं द्यूतकाराय दत्तं द्यूतकारो राजानं स्तुत्वा निजनगरं गतः। राजापि निजनगरमागतः। इमां कथां कथयित्वा पुत्तलिका राजानमभणत् भो राजन्! त्वयि एवमौदार्य्यं धैर्य्यं परोपकारादिगुणाः चेत् विद्यन्ते तर्हि अस्मिन् सिंहासने समुपविश्य राजा तूष्णीमासीत्।

---

## अथ अष्टाविंशोपाख्यानम्।

पुनरपि राजा यदा सिंहासने समुपविशति तावदन्या पुत्तलिका वदति भो राजन्! अस्मिन् सिंहासने धैर्यादिगुणयुक्तो विक्रम एव उपवेष्टुं क्षमः नान्यः भोजेनोक्तम्। भो पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्यगुणवृत्तान्तं सा कथयति श्रूयतां राजन्! विक्रमादित्यो राजा पृथिव्यां पर्य्यटन् नगरमेकमगमत्। तत्र नगरसमीपे विमलोदका नदी प्रवहति नदीतीरे नानाविधतरु कुसुमफलोपशोभितं वनमासीत् तन्मध्ये अतिमनोहरं देवालयं आसीत्। राजा तत्र नदीजले स्नात्वा देवं नमस्कृत्य देवालये उपविष्टः। अत्रान्तरे चत्वारो वैदेशिकाः समागत्य राज्ञः समीपे उपविष्टाः। ततो राजा तान् अप्राक्षीत् भो यूयं! कुतः समागताः? तत्रैकेनोक्तम्। अयं अपूर्वदेशादागतः राज्ञोक्तम्। तत्र देशे किं किमपि अपूर्वं दृष्टं? तेनोक्तम्। तत्र देशे वैतालपुरी नाम पुरी वर्त्तते तत्र शोणितप्रिया देवतास्ति तत्रत्यो महाजनो राजा च प्रतिवत्सरं स्वमनोरथपूरणार्थं अशुभनिवृत्त्यर्थं च तस्यै देवतायै पुरुषोपहारं प्रय-

च्छति तस्मिन् दिने यदि कोऽपि वैदेशिकः समायाति तर्हि तमेव देवतायै पशुवत् समर्पयति वयमपि तस्मिन्ने-वद्दिवसे मार्गवशात् तं नगरं गता ततस्तत्रत्या अस्मान् समुद्धर्त्तुं समागताः तत् श्रुत्वा वयं प्राणान् गृहीत्वा पलाय्य समागताः। एतन्महदाश्चर्यं अस्माभि दृष्टं तत् श्रुत्वा राजा विक्रमस्तत्र गत्वा देवतां प्रणमति भयङ्कराञ्च विलोक्य देवतां स्तौति।

ब्रह्माणी कमलेन्दु सौम्यवदना माहेश्वरी लीलया
कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी।
वाराही घनघोरघर्घररवा ऐन्द्री च वज्रायुधा
चामुण्डा गणनाथरुद्रसहिता रक्षन्तु मां मातरः॥

इति स्तुतिं विधाय रङ्गमण्डपे उपविष्टः। तस्मिन्नवसरे कश्चिद्दीनवदनो महाजनैः सह वाद्यं पुरस्कृत्य समायातः राजापि तं दृष्ट्वा मनसि विचारयतिस्म अयमेव देवताबलि-निमित्तं महाजनैः समानीतः। ततः अत्यन्तक्लान्तवदन इव दृश्यते अस्मिन्नवसरे मम शरीरं दत्त्वा एनं मोचयिष्यामि इदं शरीरं शतवर्षाणि स्थित्वा सर्वथा नाशमेव यास्यति अतः शरीरिणां स्वदेहव्ययेनापि धर्मः कीर्त्तिश्चोपार्जनीया उक्तञ्च।

चला लक्ष्मीश्चलाः प्राणाश्चलो देहोऽथ यौवनम्।
चलाचलश्च संसारः कीर्त्तिर्धर्मश्च निश्चलः॥

अन्यच्च, अनित्यानि शरीराणि वैभवं नैव शाश्वतम्।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः॥

तथा च, अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनं

आयुष्यं जलबिन्दुचञ्चलतरं फेनोपमं जीवितम्।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिगतः शोकाग्निना दह्यते॥

एवं विचार्य राजा तान्महाजनानुवाच। भो महाजना! अयं दीनवदनः कुत्र नीयते तैरुक्तं एनं देवतायै बलि निमित्तं दास्यामः राज्ञोक्तम्। कस्मात् कारणात्? तैरुक्तं देवता अनेन पुरुषोपहारेण तुष्टा सती अस्माकं मनोरथं पूरयिष्यति राज्ञोक्तम्। भो महाजना! अयमत्यन्ताल्पतनुः परं भीतश्च अस्य शरीरोपहारेण देवतायाः का तृप्तिर्भविष्यति तस्मादमुं मुञ्चत अहमेव तदर्थं मम शरीरं दास्यामि अहं पुष्टाङ्गोऽस्मि मम मांसोपहारेण देवतायाः तृप्तिर्भविष्यति अतो मां मारयत इति भणित्वा तं मोचयित्वा राजा स्वयमेव देवतायाः पुरतो गत्वा खड्गं यावत् कण्ठे पातयति तावद्देवतया खड्गं धृत्वा भणितः भो महासत्व! तव धैर्य्येण परोपकारकरणेन च सन्तुष्टास्मि वरं वृणीष्व राज्ञोक्तम्। भो देवि! यदि मम प्रसन्नाऽसि तर्हि अद्यप्रभृति पुरुष मांसोपहारं परित्यज देवतया तथास्तु इति भणितं महाजना राजानं वदन्तिस्म भो राजन्! त्वं सुखाभिलाषी सन् द्रुम इव परार्थमेव खेदं वहसि तथा हि।

अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परतापं छायया संश्रितानाम्।
स्वसुख विनिहताशः खिद्यते लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव॥

अथ तेषां अनुज्ञां गृहीत्वा निजनगरमगमत्। इति कथां

कथयित्वा पुत्तलिका भोजं अवदत् भो राजन्! त्वयि एवं धैर्य्यं औदार्य्यं परोपकारादिगुणा विद्यन्ते चेत् तर्हि अस्मिन् सिंहासने समुपविश ।

---

## अथ ऊनविंशोपाख्यानम् ।

पुनरपि राजा यावत् सिंहासने समुपविशति तावद्न्यया पुत्तलिकयोक्तम् । भो राजन्! यस्य विक्रमस्येव औदार्यादयो गुणा विद्यन्ते स एवात्र सिंहासने उपवेष्टुं क्षमः भोजेनोक्तम् । पुत्तलिके ! कथय तस्य विक्रमस्यौदार्य्यगुणवृत्तान्तम् सा अब्रवीत् श्रूयतां राजन् ! एकदा विक्रमार्को राजकुमारैरुपास्यमानः सभायां उपविष्टोऽस्ति तदा कश्चित् स्तुतिपाठकः समागत्य ।

यावद्वीचीतरङ्गान् वहति सुरनदी जाह्नवी पुण्यतोया
यावच्चाकाशमार्गे तपति हि भुवनं भास्करो लोकपालः ।
यावद्वज्रेन्द्रनील स्फटिक मणिशिला विद्यते मेरुशृङ्गे
तावत्पुत्रैश्च पौत्रैः स्वजनपरिवृतो भुंक्ष्व राज्यं नृपालम् ॥

इत्याशिषमुक्त्वा राजानं स्तौति भो राजन् !

यथा स्मरति जीमूतं मयूरो ग्रीष्मपीड़ितः ।
तृषितो याचते तोयं तथाहं तव दर्शनात् ॥

अहं हि दूरदेशवासी तव कीर्त्तिं समाकर्ण्य दूरादागतोऽस्मि तव कीर्त्तिः समार्णवमेदिनीमण्डिता ।

कर्पूरादपि केरवादपि दलात् कुन्दादपि स्वर्णदिकल्लोलादपि केरवादपि चलत्कान्ताद्दगन्तादपि ।

निःशेषञ्च यथा कलङ्करहितात् शीतांशुखण्डादपि
शुभ्रैताभिं स्तव कीर्त्तिभि र्धवलिता ससार्णवा मेदिनी ॥

भो राजन्! त्वां अर्थिजन कल्पद्रुममागत्य अद्य दारिद्र्य व्याधिमुक्तोऽस्मि अन्यच्च। अस्मिन् देशे सकलार्थिकल्पद्रुमं भवन्तं विलोक्य धनेश्वरनामा कश्चिद् राजा अस्माकं स्मृति-पथि उदेति। उत्तरस्यां दिशि ईशानभागे जम्बीरनगरे धनेश्वरनामा कश्चिद् राजा अर्थिनां दारिद्र्य दुःख निवारणार्थं याचकेभ्यो धनं वितरितवान् एकदा धनेश्वरेण माघशुक्ल सप्तमीदिवसे वसन्तपूजायां कृतायां सर्वे विदेशवासिनः याचकाः समायाताः तस्मिन् समये राज्ञा दानार्थं अष्टादश-कोटि सुवर्णं दत्तम्। एवमत्यन्तमौदार्य्यवरिष्ठः स राजा इव अस्मिन् देशे त्वमेव एकः दृष्टोऽसि। तस्य वचनं श्रुत्वा विक्रमादित्यः भाण्डारिकमाहूय अभणत् भो भाण्डारिक! इमं स्तुति पाठकं भाण्डारगृहे नीत्वा महार्हाणि रत्नानि दर्शय ततोऽयं यावन्ति रत्नानि अन्यान्यपि वस्तूनि गृहीष्यन्ति तावन्ति गृह्णातु तदनन्तरं भाण्डारिकस्तं भाण्डारे नीत्वा दिव्यानि अनेकानि वस्तूनि अदर्शयत् स्तुतिपाठकोऽपि स्वेप्सितवस्तूनि रत्नानि च गृहीत्वा परिपूर्ण मनोरथः राजसमीपमागत्य भणति भो राजन्! महेश्वरस्य तव प्रसादादहं धनपतिर्जातोऽस्मि तव निधयो मम हस्तं प्राप्ताः। इदानीं तव चरित्र सादृश्यमति क्रान्तं तव सादृश्यं हर-हरिहरब्रह्मादयोऽपि न बिभ्रति।

तथा हि।

वेधा वेदाश्रनाविष्टो गोविन्दोऽपि गदाधरः।

शम्भुः शूली विषादी च देवैस्त्वं केनोपमीयते ॥

एवं स्तुत्वा स्तुतिपाठकः ब्रह्मायुर्भवेत्याशिषमुक्त्वा निज-स्थानं गतः । इति कथां कथयित्वा पुत्तलिका भोजमवदत् भो राजन् ! त्वयि एवमौदार्य्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश राजा तूष्णीमासीत्।

---

## अथ त्रिंशोपाख्यानम् ।

पुनरपि यावत् राजा सिंहासने समुपविशति तावदन्या पुत्तलिका भणति भो राजन् ! यस्तु विक्रम इव औदार्या-दिगुणयुक्तः सोऽस्मिन् सिंहासने उपवेष्टुं योग्यः अन्यो न । राजाऽब्रवीत् भो पुत्तलिके ! कथय तस्य विक्रमस्यौदार्यवृ-त्तान्तं साऽब्रवीत् श्रूयतां राजन् ! एकदा सकलसामन्त-राजकुमारादिभिरुपास्यमानो राजा सिंहासने समुपविष्टो-ऽभूत् । तस्मिन् समये ऐन्द्रजालिकः कश्चित् समागत्य ब्रह्मा-युर्भवेत्याशिषमुक्त्वा भणति भो देव ! त्वं सकलकलाभिज्ञः तव समीपमागत्य अनेकैः महेन्द्रजालिकैर्लाघवानि दर्शि-तानि तर्हि अद्य मम एकं लाघवं सुप्रसन्नेन निरीक्षणीयं राज्ञोक्तम् । नेदानीमवसरोऽस्माकं स्नानभोजनवेला जाता प्रभाते द्रक्ष्यामः । ततः प्रभाते महाकायो महाश्मश्रुभिर्देदी-प्यमानवपुः विपुलस्कन्धे देदीप्यमानं खड्गं धृत्वा अति मनो-हरया स्त्रिया कयाचिद्युक्तो राजसभायां समुपविष्टे राज्ञि नमस्कार। तदा तत्रत्यैरधिकारिभिःतदकार्यं दृष्ट्वा सविस्म-यैर्भणितं भो नायक ! भवान् कुतः समागतः तेनोक्तम्। अहं महेन्द्रस्य सेवकः कदाचित् स्वामिना शप्तः अधुना भूम-

कृते तिष्ठामि इयं मम भार्य्या। अद्यैव देवदैत्ययोर्महद्युद्धं प्रारब्धं तर्हि अहं तत्र गच्छामि। अयं विक्रमादित्यः पर-नारी सहोदरः इति विचार्य्य अस्य समीपे भार्य्यां निक्षिप्य युद्धार्थं गमिष्यामि। तत् श्रुत्वा राजापि परं विस्मयं गतः। सोऽपि राज्ञः समीपे भार्य्यां निक्षिप्य राजानं निवेद्य खड्गेन यावत् गगने उत्पतति तावदाकाशे महान् भैरवरवो जातः "रे रे मारय मारय घातय इति" सभायां उपविष्टाः सर्वेऽपि लोकाः ऊर्द्ध्वमुखाः सकौतुकं पश्यन्तिस्म। तदनन्तरं मुहूर्त्ते गते राजसभामध्ये गगनात् खड्गो रक्तलिप्तः तथैको बाहुः पतितः एवं सर्वैरवलोक्य भणितं अहो एतस्याः स्त्रिया वीरः पतिः संग्रामे प्रतिभटैर्हतः तस्यैको बाहुः खड्गश्च पतितः। एवं वदति सभाजने पुनः शिरश्च पतितं तथा कबन्धः पतितः। एतत् सर्वं दृष्ट्वा वीरस्य स्त्रिया भणितं भो देव! मम भर्त्ता रणाङ्गणे युद्धं विधाय शत्रुभि-र्निहितः तस्येदं शिरः सखड्गो बाहुः कबन्धोऽपि पतितः तर्हि स मे प्रियो भर्त्ता दिव्याङ्गनाभिः व्रियते तन्निमित्तमेतत् शरीरं स्थितं स मम स्वामी रणाङ्गणे प्रतिभटैर्हतः इदानीं एतच्छरीरं कस्य कृते रक्ष्यामि प्रमदाः पतिमार्गगाः इति विचेतनैरपि ज्ञातं तथा हि।

शशिना सह याति कौमुदी सह मेघेन तड़ित् प्रलीयते।
प्रमदाः पतिमार्गगा इति प्रतिपन्नं हि विचेतनैरपि॥

तथा च, स्मृतिः, मृते भर्त्तरि या नारी समारोहेद्धुताशनम्।
साऽरुन्धतीव पूज्या स्यात् स्वर्गलोके निरन्तरम्॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत्।

तावन्न मुच्यते सा हि नरकाद्धि कथञ्चन॥
मातृकं पैतृकं चापि श्वशुरस्य कुलं तथा।
कुलत्रयं तारयेद्धि भर्त्तारं यानुगच्छति॥

तथा च, तिस्रः कोट्यर्द्धकोटी च यानि रोमाणि मानवे।
तावत्कालं वसेत् स्वर्गे भर्त्तारं यानुगच्छति॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।
तथा स्त्री पतिमुद्धृत्य सह तेनैव मोदते॥
दुर्वृत्तं वा सुवृत्तं वा सर्वपापरतं तथा।
भर्त्तारं तारयत्येषा भार्य्या धर्मेषु निष्ठिता॥

अन्यच्च, जीवितं पतिहीनाया निष्फलञ्च भवेत् ध्रुवम्।
दीनायाः पतिहीनायाः किं नार्य्या जीविते फलम्॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य च दातारं भर्त्तारं का न पूजयेत्॥

किञ्च, अपि बन्धुयुता नारी बहुपुत्रैश्च संयुता।
शोच्या भवति सा नारी पतिहीना तपस्विनी॥

तथा च, गन्धैर्माल्यैस्तथा धूपैर्विविधै भूषणैरपि।
वासोभिः शयनैश्चैव विधवा किं करिष्यति॥

तथा च, नातन्त्री विद्यते वीणा नाचक्रो वर्त्तते रथः।
नापतिः सुखमाप्नोति नारी बन्धुशतैरपि॥
दरिद्रो व्यसनी वृद्धो व्याधितो विकलस्तथा।
पतितः कृपणो वापि स्त्रीणां भर्त्ता परा गतिः।
नास्ति भर्तृसमो बन्धुर्नास्ति भर्तृसमा गतिः॥

किञ्च, वैधव्य सदृशं दुःखं स्त्रीणां अन्यं न विद्यते।
धन्या सा योषितां मध्ये भर्त्तग्रे म्रियते हि या॥

इत्युक्त्वा अग्निप्रवेशार्थं राज्ञः पादयोः पपात। राजा तस्या वचनं श्रुत्वा करुणार्द्रसमित्रकर्णः सन् शीलखण्डा-दिभिर्खितां विरच्य तस्यै अनुज्ञां ददौ। सापि राज्ञः सकाशात् अनुज्ञां लब्ध्वा भर्त्तुः शरीरेण समं अग्निं विवेश। ततः सूर्य्योऽस्तमगात्। प्रभाते राजा सन्ध्यादिकं कर्म्म समनुष्ठाय सिंहासने समुपविष्टो यावत् सकलसामन्त राजकुमारा-दिभि रुपास्यते तावत् स एव नायकः पूर्ववत् खड्गहस्तः अति दीर्घाकारो देदीप्यमानवपुः समागत्य राज्ञः कण्ठे कल्पतरुकमलग्रथितां मालां परिमललब्धमुग्धमधुकरनिकु-रम्बनिरन्तरां निधाय ततस्तस्मै नानाविधयुद्धगोष्ठीं वक्तुं प्रवृत्तः। ततः तं समागतं दृष्ट्वा सर्वापि सभा विस्म-यङ्गता। पुनस्तेन भणितं भो राजन्! मयि अस्मात् स्थानात् स्वर्गं गते तत्र महेन्द्रस्य दैत्यानां च महान् संग्रामोऽभूत् तस्मिन् समये बहवो राक्षसा निपातिताः केचन पलाय्य गताः। युद्धावसाने देवेन्द्रेण सप्रसादमहं भणितः भो नायक! त्वया अद्यप्रभृति भूलोकं प्रति न गन्तव्यम्। तव शापस्याव-सानं जातम्। तवाहं प्रसन्नोऽस्मि गृहाणेदं कुवलयमिति रत्न खचितं स्वकरात् मुक्तावलयं मम हस्ते अदात्। पुन-र्मया भणितं भो स्वामिन्! अत्रागमनसमये मया भार्य्या विक्रमार्क समीपे निक्षिप्ता। तां गृहीत्वा झटिति पुनराग-मिष्यामि इति पुरन्दरं उक्त्वा समागतोऽस्मि। त्वं परनारी सहोदरः। सा मम भार्य्या दातव्या। तया सह पुनः स्वर्लोकं गमिष्यामि। तद्वचनं श्रुत्वा राजा सर्वैः सह सभायां तटस्थो जातः। परं विस्मयं गत्वा तूष्णीं स्थितः। पुनस्तेन गदितं भो

राजन्! किमिति जोषमास्यते राज्ञः समीपस्थै र्भणितं तव भार्य्या अग्निं प्रविष्टा। तेनोक्तम्। किमर्थं? ततस्ते निरुत्तरीभूताः आसन्। तदा तेन भणितं राजशिरोमणे! परनारी सहोदर! लोककल्पद्रुम! विक्रमभूमिपाल! अक्षायुर्भव अहं महेन्द्रजालिकः तव पुरतः इन्द्रजालविद्यालाघवं दर्शितं राजापि विस्मयं गतः प्रसन्नोऽभूत्। तस्मिन्नवसरे भाण्डारिकेणागत्य उक्तं भो महाराज! पाण्ड्यराजेन स्वामिने करः प्रेषितः। राज्ञोक्तम्। किं किं प्रेषितम्। तेनोक्तम्। स्वामिन्! अवहितं शृणु।

अष्टौ हाटककोटयः त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मधुगन्धलुब्धमधुपैः संशोभिताः सिन्धुराः।
अश्वानां त्रिशतं च वै चतुरं पण्याङ्गनानां शतं
श्रीमद्विक्रम भूमिपाल! भवतः श्रीपाण्ड्यराट् प्रेषितम्॥

ततो राज्ञा भणितं एतत् सर्वं ऐन्द्रजालिकाय देहीति। तदा तत् सर्वं तेन दत्तम्। इमां कथां कथयित्वा पुत्तलिका भोजराजमवदत्। भो राजन्! त्वयि एवं औदार्य्यं विद्यते चेत् तर्हि अस्मिन् सिंहासने समुपविश राजा अधोमुखो बभूव।

---

## एकविंशोपाख्यानम्।

पुनरपि राजा सिंहासने यावत् समुपविशति तावदन्या पुत्तलिका वदतिस्म। भो राजन्! अस्मिन् सिंहासने स एवो उपवेष्टुं क्षमः यस्य विक्रमस्येव औदार्य्यादयो गुणा भवन्ति राज्ञोक्तम्। भो पुत्तलिके! कथय तस्य विक्रमस्यौदार्य्य-

वृत्तान्तम्। सा कथयति भो राजन्! श्रूयतां विक्रमार्के राज्यं कुर्वति एकदा कश्चिद्दिगम्बरः समागत्य राज्ञो हस्ते फलं दत्त्वा आशिषं प्रयुज्य भणति भो राजन्! अहं मार्गशीर्षे कृष्णचतुर्दशीदिवसे श्मशाने हवनं करिष्यामि तर्हि भवान् परोपकारी सत्त्वाधिकः तत्र ममोत्तरसाधकेन भवितव्यं तस्य श्मशानस्य नातिदूरे शमीपादपो आस्ति तत्र कश्चिद्वेतालः लग्नस्तिष्ठति स त्वया मौनेन नेतव्यः। राज्ञा तथा करिष्यामि इति प्रतिज्ञातम्। अथ क्षपणकः कृष्णचतुर्दशीदिवसे श्मशाने होमसाधन द्रव्याणि गृहीत्वा स्थितः। अथ तेन दर्शितं शमीपादपस्थितं वेतालं दृष्ट्वा स्कन्धे गृहीत्वा राजा यावत् मार्गे आगच्छति तावत् वेतालेनोक्तम्। भो राजन्! मार्गश्रमापनोदनाय कामपि कथां कथय। राजा मौन भङ्ग भयात् तूष्णीं स्थितः। पुनर्वेतालेनोक्तम्। त्वं मौन भङ्ग भयात् कथां न कथयसि अहं तावत् कथयिष्यामि। कथावसाने मौन भङ्ग भयान्न कथयिष्यसि चेत् तव शिरः सहस्रधा भविष्यति इति भणित्वा कथां कथयति।

राजन्! श्रूयतां हिमवतो दक्षिणपार्श्वे विन्ध्यवती नाम्नी नगरी आसीत्। तत्र सुविचारको नाम राजा प्रतिवसतिस्म तस्य पुत्रो मयसेनः स एकदा आखेटनार्थं वनं गतः वने हरिणमेकं दृष्ट्वा तदनुगतो महारण्यं प्रविष्टः। तदा कश्चिन्नगरमार्गमासाद्य एकाकी यावदागच्छति तावन्मध्ये एका नदी दृष्टा तत्र नदी तटाके कश्चिद्ब्राह्मणः अनुष्ठानं करोति। राजपुत्रः तस्य समीपं गत्वा तमवदत्

भो ब्राह्मण! यावत् जलं पास्यामि तावत् मम अश्वं गृहाण। ब्राह्मणेनोक्तम्। अहं किं तव प्रेष्यः यद् अश्वं धारयिष्यामि। ततस्तेन कशया ताड़ितः ब्राह्मणः रुदन् राजसमीपमागत्य निवेदयामास। राजाऽपि क्रोधदारुणलोचनः सन् पुत्रं स्वदेशात् निर्वासयितुमादिदेश। तस्मिन्नवसरे मन्त्रिणा भणितम्। अयं राज्यभागी न योग्यः कुमारो न तु स्वदेशात् निर्वासनीयः। एतदुचितं न भवति राज्ञोक्तम्। भो मन्त्रिन्! तदुचितं एव यतः ब्राह्मण शरीरं कशया ताड़ितं तस्मादयं समीचीनदण्डो भवति बुद्धिमता ब्रह्मद्वेषो न कर्त्तव्यः उक्तञ्च।

न विषं भक्षयेत् प्राज्ञो न क्रीड़ेत् पन्नगैः सह।
न निन्द्येद्योगिवृन्दानि ब्रह्मद्वेषं न कारयेत्॥

भो मन्त्रिन्! किं त्वया पुराणानि न श्रुतानि पुरा ब्राह्मणस्य शापात् ईश्वरस्य लिङ्गपातो जातः नृगस्य कृकलाशत्वं इन्द्रस्य दारिद्र्ययोगः नहुषस्य महोरगत्वं स्वयं सम्पन्नोऽपि पूज्यान् न तिरस्कुर्य्यात्।

अत्युन्नतपदं प्राप्तः पूज्यान् नैवावमानयेत्।
नहुषः सर्पतां प्राप्तश्च्युतोऽगस्त्यावमाननात्॥
अतस्ते ब्राह्मणाः सर्वे पूजनीया च सर्वदा।'

तथा च, यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः।
क्षयेश्चाप्यासितश्चन्द्रः को न नश्येत् प्रकोप्य तान्॥

किञ्च, यद्धस्तेन सदाश्नन्ति हव्यानि त्रिदिवौकसः।
कव्यानि चैव पितरः को भवेत् अधिकस्ततः॥

तथा च, ये पूजिताः सुरैः सर्वैर्मनुष्यैश्चैव भारत।।

तपोव्रतधरा ये च तां स्तान् विप्रान् समर्चयेत् ॥
तथा च, द्वारावत्यां स्वयं कृष्णेनाप्युक्तम्।
शतं शपन्तं परुषं वदन्तं स पापकृत् ब्रह्मदवाग्निमध्ये।
यो ब्राह्मणं नार्चयते यथाहं वध्यश्च दण्ड्यश्च सदास्मदीयः ॥
किञ्च, यश्च मां परया भक्त्या आराधयितुमिच्छति।
तेन विप्राः सदा पूज्या एवं तुष्टो भवाम्यहम् ॥

भो मन्त्रिन्! येन हस्तेन ताड़ितो ब्राह्मणः तस्य हस्तस्य च्छेदः कार्य्यः इति यावत् तस्य हस्तं च्छेदयति तावत् स ब्राह्मणः समागत्य भणति भो राजन्! तदा अज्ञानवशात् तथा कृतं अद्यप्रभृति एवमनुचितं न करिष्यति मम कारणात् राजपुत्रो रक्षणीयः अहं प्रसन्नो जातोऽस्मि तस्य वचनं श्रुत्वा स्वपुत्रं विससर्ज। ब्राह्मणोऽपि निजनिलयं अगात्। इमां कथां कथयित्वा वेतालो वदति भो राजन्! एतयोर्मध्ये गुणाधिकः कः? राज्ञा विक्रमेण भणितं राजा एव गुणाधिकः। तत् श्रुत्वा मौनभङ्गात् वेतालः शमीपादपं जगाम राजापि पुन स्तत्र गत्वा तं स्कन्धे समारोप्य यावदागच्छति तावत् पुनरपि कथां कथयति एवं कथानां पञ्चविंशतिः कथिता वेतालेन। तस्य सूक्ष्मबुद्धि वैदग्ध्येन वेतालः प्रसन्नो जातो विक्रमं जगाद भो राजन्! अयं दिगम्बरः त्वां निहन्तुं प्रयत्नं करोति राज्ञोक्तम्। तत्कथं? वेतालेनोक्तम्। यदा त्वं मां तत्र नेष्यसि तदा तव पराभवो भविष्यति "त्वं श्रान्तोऽसि इदानीमग्निकुण्डं प्रदक्षिणी कृत्य दण्डवत् प्रणम्य निजस्थानं गच्छ" इति दिगम्बरेण कथिते यदा त्वं दण्डवत् प्रणामं कर्त्तुं नम्रो भविष्यसि

तदा दिगम्बरः खड्गेन त्वां निहनिष्यति ततस्तव मांसेन होमं करिष्यति । एवं क्रियमाणे तस्य अणिमाद्यष्टौ सिद्धयो भविष्यन्ति विक्रमेणोक्तम् । अधुना किं क्रियते ? वेतालेनोक्तम् । त्वमेवं कुरु यदा दिगम्बरः त्वां नमस्कृत्य गच्छ इति वदिष्यति त्वया एवं तं प्रति वक्तव्यं अहं सार्वभौमः सर्वे राजानः मां प्रणामं कुर्वन्ति मया कदापि कस्यापि प्रणामो न कृतः । अतोऽहं प्रणामं कर्त्तुं न जानामि त्वं प्रथमं प्रणामं कृत्वा दर्शय । तद् दृष्ट्वा पश्चादहं प्रणामं करिष्यामि ततः सः यदा प्रणामं कर्त्तुं नम्रो भविष्यति तदा त्वं तस्य शिरः छिन्धि अहं तव बाधां न करिष्यामि तवाष्टौ सिद्धयो भविष्यन्ति एवं वेतालेन निवेदिते राजा विक्रमस्तथैव अकरोत् । राज्ञोऽष्टौ महासिद्धयः जाताः । अथ वेतालेनोक्तं भो राजन् ! तवाहं प्रसन्नोऽस्मि वरं वृणीष्व राज्ञोक्तम् । यदि मम प्रसन्नोऽसि तर्हि यदाहं स्मरिष्यामि तदा त्वया मत्समीपे आगन्तव्यं स तथेति प्रतिज्ञाय निजस्थानं गतः । राजापि निजनगरीं विवेश । इमां कथां कथयित्वा पुत्तलिका अवदत् भो राजन् ! त्वयि एवमौदार्यादयो गुणा विद्यन्ते चेत् तर्हि अस्मिन् सिंहासने समुपविश राजा तूष्णीमासीत् ।

---

## अथ द्वात्रिंशोपाख्यानम् ।

पुनरपि राजा सिंहासने यावदुपविशति तावदन्या पुत्तलिका भणति भो राजन् ! सिंहासने स विक्रमार्क एव

उपवेष्टुं क्षम: नान्य: तस्य विक्रमस्य सदृशो राजा भूमण्डले नास्ति य: काष्ठमयेन खड्गेन पृथिवीमध्ये भ्रमन् सर्वान् पृथ्वीधरान् विजित्य एकच्छत्रेण राज्यमकरोत् योऽपि अन्येषां शङ्कां निराकृत्य आत्मन: शङ्कां प्रावर्त्तयत् भूमण्डले यावन्तो राजान: सन्ति तेषां सर्वेषां वशीकरणमन्त्र: प्रयुक्त: समस्तान् दुर्जनजनान् निष्कास्य याचकानां दारिद्र्यं मोचयित्वा दुर्भिक्ष दु:खादीन् निवार्य्य च विक्रमेण पृथिवी पालिता। अतो विक्रमसदृशो राजा नास्ति एवं औदार्य्यादयो गुणास्त्वयि विद्यन्ते यदि तर्हि अस्मिन् सिंहासने समुपविश तत्श्रुत्वा राजा भोजस्तूष्णीमासीत्।

पुनरपि द्वात्रिंशत् पुत्तलिका भोजराजमब्रवीत् भो भोजराज! विक्रमादित्यो राजा तथाविध: त्वमपि सामान्यो न भवसि युवां द्वौ नरनारायणावतारधारिणौ तस्मात् त्वत्त: परमपवित्रचरित्र: सकलकलाप्रवीण: औदार्य्यगुणविशिष्टो राजा वर्त्तमानसमये नास्ति तव प्रसादादस्माकं द्वात्रिंशत् पुत्तलिकानां पापक्षयो जात: शापादिमुक्तिरपि जाता। भोजेनोक्तम्। तत्कथं, शापस्य वृत्तान्तं कथय। पुत्तलिका अवदत् श्रूयतां राजन्! द्वात्रिंशत् सुराङ्गना: पार्वत्या: सख्य: तस्या: परमप्रेमास्पदीभूताश्च प्रत्येकं नामधेयानि श्रूयन्तां मिश्रकेशी १ प्रभावती २ सुप्रभा ३ इन्द्रसेना ४ सुदती ५ अनङ्गनयना ६ कुरङ्गनयना ७ लावण्यवती ८ कामकलिका ९ चण्डिका १० विद्याधरी ११ प्रज्ञावती १२ जनमोहिनी १३ विद्यावती १४ निरुपमा १५ हरिमध्या १६ मदनसुन्दरी १७ विलासरसिका १८ शृङ्गार-

कलिका १९ मन्मथसञ्जीवनी २० रतिलीला २१ मदनवती २२ चित्ररेखा २३ सुरतगह्वरा २४ प्रियदर्शना २५ कामोन्मादिनी २६ सुखसागरा २७ शशिकला २८ चन्द्ररेखा २९ हंसगामिनी ३० कामरसिका ३१ उन्मादिनी ३२। एकदा सिंहासने समुपविष्टः परमेश्वरः प्रेम्णा विलासेन अस्मासु दृष्टिं निदधौ तं दृष्ट्वा देवी पार्वती सकोपमस्मान् अशपत् भवत्यो निर्जीवाः पुत्तलिका भूत्वा इन्द्रस्य सिंहासने लगन्तु ततोऽस्माभिश्च सप्रणिपातं शापावसानं याचितं अथ सा देवी समवदत् यदा तत् सिंहासनं विक्रमेण अधिष्ठितं भूत्वा पुनः भोजस्य हस्तगतं भविष्यति। तदा सुरेश्वराप्सरादीनां भोजराजसंवादो भविष्यति यदा च विक्रमचरितं भोजराजा युष्मभ्यः श्रोष्यति तदैव शापावसानो भविष्यति अथ राज्ञः सकाशादनुज्ञां गृहीत्वा पुत्तलिकाः स्वस्थानं जग्मुः। ततो भोजराजस्तस्य सिंहासनस्योपरि देवालयं कारयित्वा तत्र देव्या अष्टदले उमामहेश्वरमूर्त्तिं प्रतिष्ठाप्य प्रतिदिनं षोड़शोपचारैः पूजां कारयतिस्म वर्णाश्रम धर्मनिरतान् लोकान् परिपालयन् उर्व्वीं शशास ततो देवतापूजनेन स्तुत्या च गौरी परम सन्तोषमगमत्।

---

५२ गायत्री व्याख्या ॥

५३ सांख्यदर्शन (भाष्यसहित) सांख्य प्रवचन भाष्य २

५४ भोजप्रबन्ध ॥।०

५५ नलोदय सटीक ॥

५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक भाष्य) ५

५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५

५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २

५९ बृहदारण्यक (उपनिषद्) सटीक सभाष्य १०

६० सुश्रुत वैद्यक ४

६१ शार्ङ्गधर (वैद्यक) १

६२ वेतालपञ्चविंशति ॥।०

६३ पातञ्जलदर्शन (सभाष्यसटीक) ४

६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २

६५ मुक्तिकोपनिषत् [illegible]

६६ उपमान चिन्तामणि ।०

६७ नागानन्द नाटक १

६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि कृत भाष्य सहितम्) २

६९ चन्द्रशेखरचम्पू काव्य २

७० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २

७१ सामवेदस्य आरण्यसंहिता सायणाचार्य्य कृत भाष्यसहिता १

७२ विद्धशालभञ्जिकानाटिका सटीक १

७३ कारण्डव्यूह (बौद्धशास्त्र) २

७४ कुवलयानन्द अलङ्कारचन्द्रिका टीका सहित २

७५ प्रियदर्शिका नाटिका सटीक (श्रीहर्षविरचित) ॥

७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।

७७ वासवदत्ता सटीक २

७८ (कालिदास कृत) पुष्पवाणविलास काव्य सटीक ॥

७९ भिक्षाटन शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १

८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित ५

८१ नैषधचरितम् (मल्लिनाथ कृत टीका सहित) १०

८२ चन्द्रालोक प्राचीन अलङ्कार ॥

८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०

८५ प्रबोधचन्द्रोदय नाटक सटीक २

८६ अनर्घराघवनाटक (मुरारिकृत) २

८७ दैवतब्राह्मणसभाष्य १

८८ षड्विंशब्राह्मणम् सभाष्य १

८९ मीमांसा परिभाषा ॥०

९० अर्थसंग्रह (लौगाक्षीमीमांसा) ॥०

९१ रघुवंश सटीक १॥०

९२ मेघदूत सटीक ॥०

९३ ईश्वरनिरूपणम् १

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

